पुरे संजाए कालंतरे पुसभूमिं नानं आगओ मिहिलाहिंतो तत्थ जणयराओ। तेण य तत्थ दस जला का(क)रिया[1]। जणयट्टा[2]णंति तन्नयरं रूढं। अन्नया देवआणी नाम सुक्कस्स महग्गहस्स धूआ जणयट्टाणपुरे कीलंती दंडयराएणं दिट्ठा रूववइ त्ति बला भोडीए भग्गं तीसे सीलव्वयं। तस्स सरूवं उवलब्भ सुक्कमहग्गहेणं रोमव[3]सेणं सावो दिन्नो। 'एयं नयरं दंडयरायसहिअं सत्तदिवसब्भंतरे छ(छा?)ररासी[4] भविस्सइ त्ति।' तं च नायं नारयरिसिणा दंडयरायस्स[5] कहिअं तं च[6] सोऊण भीओ दंडयाराया सयलं जणं सह आणीउं चंदप्पहसामिणं सरणं पव्वन्नो छुट्टो अ। तप्पभिइं जण[7]या(या?)णति तस्स नयरस्स पसिद्धं नामधिज्जं। एवं परति[8]त्थिआ वि जस्स तित्थस्स माहप्पं उववसिंति[9] तस्स आरहंतलोआ कहं नोवसिहिंति। इत्थंतरे दावरयुगे पडुरायपत्तीए कुंतीदेवीए पढमपुत्ते जुहिट्ठिले[10] संजाए चंदप्पहसामिणो पासाय जिन्नं दट्ठूण उद्धारो काराविओ। सहत्थेणं विल्लरुक्खो अ तत्थ

---

१ 'करिया' B.  २ 'जणाय' B. T. 'जण[य ?]' A.

३ 'रोसवसेण' B.  ४ 'छार' A. 'छा... रासी' B.

५ 'दंडयराएणं' इत्यारभ्य—रोसवसे—' इत्यन्तं पाठः पुस्तके द्विवारं, लिखितो लेखकदोषेण।

६ 'चेव' A.  ७ 'जणायाणं' B.

८ 'परतिथि (त्थि ?) आ' B.

९ 'उववसिति' A.  १० '... ट्ठिले' B.

वावि[1]ओ। तत्थ **कुंतीविहा**[2]रुत्ति नामं विक्खायं। इओ अ दी[3]वा[य?]णरिसिणा बारवईए दड्ढाए उवक्खीणम्माए **जायववंसे वज्जकुमारो** नाम **जायव**खत्तिओ आसि। तस्स गब्भवई भज्जा साबारवईए उज्झमाणीए बहुभित्तिपुव्वं **दीवायण**रि[4]सि(सिं)मुक्कलाविता **चंदप्पह**सामिणं चेव सरण-मागया पुन्ने समये पुन्नवंतं पुत्तं तत्थेव पसूआ। **दढप्पहारि**त्ति से नामं कयं। सो अ अइक्कंतबालभावो संपत्तजुव्वणो जाओ। महारहो इक्कंगेणावि[5] सुहडलक्खेणं समं जुद्धं काउं समत्थो। अन्नया तत्थ चोरेहिं गाविओ हरिआओ ताओ सव्वाओ वि इक्केण **दढप्पहारिणा**[6] चोरे निज्जि[7][णि?]ऊण वालिआओ। तओ तं अइपयंडपरक्कमं पासिऊणं बंभणाइनयरलोएणं[8] तस्स तलारपयं दिन्नं[9]। निग्गहिआ तेण चोरचरडाइणो। जाओ सो कमेण महाराया तत्थेव नयरे **जायव**वंसस्स[10] बीयं तत्थ उव्वरियंति। सबहुमाणं **चंदप्पह**सामिणो तेण भवण-मुद्धरिअं[11]। एवं तइअजुगे उद्धारो एवं[12] अणेगे उद्धारा

---

१ वाविउं (जो ?) B. २ 'विहारि (रु ?) त्ति' A.
३ 'दीवायण' B. ४ 'रिसिं' B. T.
५ 'इक्क (क्कं ?) गेणावि' B. ६ 'दढप्पहारिणो (णा ?)' B.
७ 'निज्जिणिऊण' A. B. ८ 'नयरलोएण' B.
९ 'तलारप... दिन्नं' B. १० 'जायववं सव्वस्स' B.
११ 'उद्धरियं' B.
१२ 'एवं अणेगे' इत्यारभ्य,— 'सिरिसंतिसूरीहिं उद्धारो' इत्यन्तं पाठः A. पुस्तके नास्ति।

जुगतिगे वि तस्स संजाया। संपयं कलिकाले सिरिसंति-**सूरीहिं** उद्धारो काराविओ। पुव्विं किर **कल्लाणकडए** नयरे **परमड्डी**[1] नाम राया रज्जं करेइ। तेणं जिणभत्तेण तत्थ पासाए चंदकंतमणिबिंबं सोऊण[2] चिंतिअं अहमेयं बिंबं नियघरे आणिऊण देवयावसरे पूइस्सामित्ति। तओ कह वि तव्वइयरं नाउं **नासिक्कनयर**लोएण तंबमयसंपुडमज्झे तं बिंबं निक्खिविअ तदुवरि लेवो दिण्णो। जाया लेवमई पडिमा। तओ रायणा जिणमंदिरमागएण तं बिंबं न दिट्ठं।[3] पुच्छिओ लोओ। तेण जहट्ठिए विण्णत्ते रण्णा[4] चिंतिअं कहं एगं ले[5]वपडिमं भिंदित्ता[6] मूलबिंबं कड्ढेमित्ति। तओ नरिंदेण तस्स भवणस्स उद्धारं काउं चउवीसं गामा देवस्स दिण्णा। जं तेसु दविण-मुप्पज्जइ तेण देवाहिदेवो पूइज्जइ तओ कित्तिए वि कालंतरे गए आसन्नवत्ति[7]तंबय[8]देवाहिट्ठियमहादुग्ग**बंभगिरि**ठिओ **वाइओ** नाम महल्लयखत्तियजाईचरडो आसि। तेण पासाओ पाडिओ। तं सोऊण **पल्लीवाल**वंसावयंससाहु**ईसर**पुत्त**माणिक्क**पुत्तेण **नाउ**[9]कुचि(क्खि)सरोवररायहंसेण साहु**कुमरसीहे**ण परमसाव-

---

१ 'परमट्टी' A.
२ 'सोउण चिंतिअं अहमेयं बिंबं' इति B. पुस्तके नास्ति।
३ 'दिट्ठं (ट्ठं ?)' B.
४ 'विन्नत्ते' A.
५ 'एगं चेव' P.
६ 'भिन्नं दिंत्ता' B.
७ 'वन्नि(त्ति ?)' A.
८ 'तंबयं' A.
९. 'नाउकुच्चि(क्खि ?)' A. B.

एण पासाओ पुणण्णवो कारिओ। सकलीकयं नायागमं नियवित्त उत्तारिओ अप्पा[1] भवसमुद्दाओ । एवमणेगउद्धारसारं नासिक्क-महातित्थं अज्जवि जत्तामहूसवकरणेण[2]आराहिंति चाउद्दिसाओ आगंतूण संघा पभाविंति कलिकालदप्पनिन्नासणं भयवओ सासणं ति ।

नासिक्कपुरस्स इमं कप्पं पोराणपरमतित्थस्स ।
वायंतपढंताणं संपज्जइ वंछिया रिद्धी ॥
किंचि परसमइयमुहा समयपराविउ सुहाउ तह सोउं ।
सिरिजिनप[2]हसूरीहिं लिहिओ नासिक्कपुरकप्पो ॥

॥ श्रीनासिक्यपुरकल्पः ॥

॥ ग्रंथाग्रं ५८ अ २७ ॥

---

१ 'अप्पा' इति B. पुस्तके नास्ति ।

२ 'जिणप्पह' A.

पणमिअ पासजिणेसं हरिकंखीनयरचेइयनिविट्ठं ।
तस्सेव कप्पमप्पं भणामि निहुलिअकलिदप्पं[१] ॥

गुज्जरधराए हरिकंखीनामो अभिरामो गामो अच्छइ । तत्थ जिणभवणे उत्तंगसिहरे संनिहिअपाडिहेरा सिरिपासनाह-पडिमा विविहपूआहिं पूइज्जइ भविअजणेणं तिकालं । अन्नया चालुक्कवंसपईव सिरिभीमदेवरज्जे तुरुक्कमंडलाओ आगएण सबलवाहणेण अ ततुक्काभिहाणसल्लारेण अणहिलवाडय-पट्टणगढं भंजित्ता बलं तेण दिट्ठं हरिकंखीगामे तं चेईयं[२] । मज्झे पविसित्ता भग्गा पासनाहपडिमा । तओ गामं उवद्दु-वित्ता चलिओ सट्ठाणं पइसल्लारो । पुणो वसिओ गामो । समा-गया गुट्ठिअसावया भगवंतं भग्गं तं निरूविता परुप्परं[४] भणिउं पवत्ता। अहो भगवओ महामाहप्पस्सावि कहं नाम भंगो विहिओ मिलाएहिं । कत्थ पुण सा भगवओ तारिसी कला गयत्ति । तओ तेसिं पसुत्ताणं सुमिणे आइट्ठ(ट्ठं?) अहिट्ठायगसुरेहिं । जहा'एयाए पडिमाए खंडाणि सव्वाणि एगट्ठीकाऊण गब्भहरे ठावित्ता दुवारं कवाडरुद्धं काउं तालयं दाऊण छम्मासं जाव पडिवालेय[५]व्वं । तओ परं दुवारमुग्घाडिय पडिमा निरिक्खियव्वा संपुन्नंगोवंगा ।' गोट्ठिएहिं भोगं काऊण तहेव कयं । जाव पंचमासा वोलीणा छट्ठस्स पारंभे ऊसुगीहोऊण गोट्ठिएहिं बारमुग्घाडियं[६] ।

---

१ 'कप्पमप्पं'. २ 'हरिक(कं?) खी A.
३ 'चेईयं' B. ४ 'परुप्पर(रं?)' A. B.
५ 'पडिमालेयव्वं' B. ६ 'उग्घाडयं' A. B.

जाव दिट्ठा भगवओ संपुसंगुवंगकप्पा केवलं ठाणे ठाणे मसनिवहपूरिआ। तओ तत्तम[1]त्तिआ[2]रित्ता तेहिं आढओ सुत्तधारो तेण टंकिआए[3] मसा छिंदिउमारद्धा जाव नीसरिअं मसेहिंतो रुहिरं तओ भीया गुट्ठिआ पूआभोगाईएहिं पसाएउमारद्धा। तओ रत्तीए सुमिणे आइट्ठमहिट्ठायगेहिं। जहा-'न सोहणं कयं तुम्हेहिं[4]।' जओ अपु[5]न्ना ए वि कम्मासीए दुआरमुग्घाडिअं। पुणो वि टंकिआ वाहाविआ। 'संपयं पि डु(ढ?)क्केइ[6] मह दुवारं जाव चरमो मासो समप्पइ'। तेहिं तहेव विहिए कम्मासाणंतरं उग्घाडिअम्मि दारे दिट्ठा पाससामिस्स पडिमा। निरुवहयअखंडअंगुवंगा। केवलं नहसुत्तीसु अंगुट्ठे य मणागं तुच्छा। पइट्ठिा य गुट्ठिया पुव्वं व पूइउं पवत्ता। आगच्छंति चाउद्दिसाओ संघा। करिंति जत्तामहूसवं। एवं चमुकारकारिमाहप्पनिही सिरिपासनाहो।

इय हरिकंखीनयरे परिट्ठिअस्सासमेणत[7]न(ण)यस्स।
सिरिजिणपह[8]सूरीहिं कप्पो विहिओ समासेणं॥

॥ इति हरिकंखीनगरस्थतवमतेः श्रीपार्श्वनाथस्य कल्पः॥

॥ ग्रं २५ ॥

---

[1] 'उत्तम' B. [2] 'वियारित्ता' A. B.
[3] 'कियाए' B. [4] 'तुम्हेणिं(हिं)' A.
[5] 'पुस्साएवि' B. [6] ''पि डुके' A.
[7] 'तणयस्स' A. B. [8] 'जिणप्पह' A.

सिरिसत्तुंजयसिहरे परिट्ठिअं पणमिऊण रिसहजिणं।
तस्से वयस्स वुच्छं[1] कवड्डिजक्खस्स[2] कप्पमहं ॥

अत्थि बालक्कजणवएं पालित्ताणयं नाम नयरं। तत्थ कवड्डि[3]नामधिज्जो गाममहत्तरो। सो अ मज्जमं[4]समक्कजीवघाय-अलिय[5]वयणपरधणहरणपर[6]रमणीरमणाइपविट्ठाणपसत्तचित्तो अणाही नामियाए अणुकूविट्ठियाए भज्जाए सह विसए उव-भुंजंतो गमेइ कालं। अन्नया तस्स मंचयट्ठिअ(य ?)स्स[7] साऊजुअलं घरे पत्तं। तेणावि दिट्ठिपणामं काउं विन्नत्तं जोडि[8]-अकरेण। भयवं ! किमित्थागमणकारणं[9] तुम्हाणं। अम्ह घरे दुद्धदहिघयतक्काइपउरमत्थि। जेण कज्जं तं आइसह। साहूहिं भणिअं। न अम्हे भिक्खट्ठमागया किंतु अम्ह गुरुणो सपरिवारा सित्तुज्जजत्ताए आगया। संपयं पुण वासारत्तो पत्तो साहूणं विहरिउं न कप्पइ। अओ तुम्ह[10] पा[से ?]उ वस्सयं मग्गेउमागया। जत्थ सूरिणो सपरिवारा चिट्ठंति। सयहरेण विन्नत्तं दिन्नो मए उवस्सओ। आगच्छंतु[11]

---

१ 'वुच्छुं' B. २ 'कवडिजक्खस्स' A. B.
३ 'कवडि' B. ४ 'मज्जमंसु' A.
५ 'अलिअ' B. ६ 'परमरमणी' B.
७ 'ट्ठियस्स' A. B. ८ 'जोडिय' B.
९ 'इत्यागमकारणं' A. १० 'पासे उवस्सयं' A. 'पाओ (उ ?)वस्सयं' B.
११ 'आगच्छंत.'

सूरिणो चिट्ठंतु अ(ज?)हासुहं। केवलं(लं?) अम्हाणं पावनिरयाणं धम्मोवएसो न दायव्वोत्ति। साहूहिं भणिअं एवं होउत्ति। तओ आगया गुरुणो ठिया वासाचउम्मासिं। कुणंति संतयं सज्झायं। सोसंति छट्ठट्ठमाईहिं नियतणुं। कमेण अइक्कंते वासारत्ते पारणए मुक्कलाविंति मयहरं गुरुणो। सो तेसिं सच्चपइस[1]त्तणओ परितुट्ठो नियनयरसीमसंधिं जाव वोलाविउं पट्ठिओ। पच्छाए सीमसंधीए सूरीहिं जंपिअं। भो मेहर! तए[2] अम्हाणं उवस्सयदाणाइणा बहुउवयारो कओ। अओ संपइ किंवि धम्मोवएसं देमो जेण पच्चुवयारो कओ हवइ। मेहरेण भणिअं नियमो न ताव मह निव्वहइ किंचि मंतक्खरं उवइसह। तओ सूरीहिं अणुकंपाए पंच-परमिट्ठिनवकारमहामंतो सिक्खाविओ। जलजलणथंभणाइ[3]-पभावो अ तस्स उववण्णिओ[4]। पुणो गुरूहिं भणिअं पइदिअहं सित्तुज्जदिसाए होऊण तुमए पणामो कायव्वो। मेहरेण तहत्ति पडिवज्जिऊण गुरुणो पणमिऊण नियघरे आगयं। सूरिणो अन्नत्थ विहरिआ। कमेण तं पंचपरमिट्ठिमंतं जविंतो[5] नियमं च निव्वाहिंतो कालं अइवाहेइ। अन्नया निअघरि-णीए कलहं काऊण गेहाओ नीसारिओ। आरहिनुं(उं?) लग्गो

१ 'पच्चपइस्स' B. २ 'हरत अम्हाणं' B.
३ 'थंभणाई' A. B. ४ 'उव(व?)वस्सिओ'
५ 'जविं(विं?)तो' A.

**सित्तुञ्जगि**रिसिहरं। जाव मज्झभरियं भायणं करे धरित्ता वडरुक्खच्छायाए मज्जपाणं करिउकामो उवविट्ठो ताव गिज्झ-मुहकुहरट्ठियअहिगरलबिंदू मज्जपाणे पडिओ दिट्ठो। तं दट्ठूण विरत्तमणो मज्जं निअमेइ। भवविरत्तो अ अणसणं काऊण तक्खणं **आइजिणिंद**चलणकमलं नवकारं[1] च संभरंतो सुहज्झ(ज्झा)णेण मरणं संपत्तो। तित्थमाहप्पेणं नवक्का[2]रप्पभावेणं च **कवडि(ड्डि?)**जि(ज?)क्खो उप्पन्नो। ओहि[2]नाणेण पुव्वभवं संभरिअ **आइजिणिंदं** अच्चेइ। सा [3]य तस्स गेहिणी तव्वइयरं सुणित्ता तत्थ आगंतूण अप्पाणं णिंदंती अणसणं करित्ता[4] जिणिंदं सुमिरंती कालधम्मसुवगया। जाया तस्सेव करिवरत्तेण वाहणं। **कवडि(ड्डि?)**जक्खस्स चउसु भुअदंडेसु कमेण पासंकुस-दविणवासणिआबीयपूराइ[5] चिट्ठंति। पुणो सो ओहिणा आभो-एऊण पुव्वभवगुरूणं पाय[6]मूले पत्तो। वंदित्ता जोडि[7]यकरयलो विन्नवेइ भयवं? तुम्ह पसाएण एरिसा मए रिद्धी लद्धा। संपयं मह किंचि किच्चमाइसह। गुरुणा जंपियं[8] इत्थ तित्थे निच्चं तुमए ठाएयव्वं। तिक्कालं[9] **जुगाइनाहो** अंचिअव्वो।

---

१ 'नवकार' A. B.
२ 'उ(ओ?)हिन्ना(ना?)णेन' B.
३ 'सावय' B.
४ 'का(क?)रित्ता' A.
५ 'पूराइ(इं?) A. B.
६ 'पा[य?]मूले' A. B.
७ 'जोडिअ' B.
८ 'जंपिअं' B.
९ 'तिकालं' B.

जत्तागयभवियजणाणं मणवंछिअफलं पूरेयव्वं[1]। सयलसंघस्स विग्घा अवहरिअव्वा। तओ गुरूणं पाए वंदिअ तहत्ति पडिवज्जिय[2] गओ जक्खाहिवो विमलगिरिसिहरं। करेइ जत्ता-गुरूवइट्ठं।

इअ अंबादेवीए कव[3]ड्डिजक्खस्स जक्खरायस्स।
लिहिअमिणं कप्पजुगं जिनपह[4]सूरीहिं बुड्ढवयणाओ॥

॥ कपर्द्दियक्षकल्पः ॥

॥ ग्रं. ४२ ॥

---

१ 'पूरेअव्वं' B. २ 'पडिवज्जिअ' B.
३ 'कवडि' A. ४ 'जिणप्पह' A.

पुव्विं किर अवज्झाए नयरीए दसरहनंदणो सिरिपउमा-भिहाणो अट्ठमो बलदेवो परमसम्मद्दिट्ठी[1] अणेगमो दिट्ठपच्चयं अणो(णे ?)गविज्जावहारिणि[2] अणागयजिणिंदस्स सिरिपास-नाहस्स रयणमइं पडिमं निच्चदेवयावसरे चिरकालं पूइत्था । कालक्कमेण पुव्वदेसे पउमागरा अपउमाइच्चाइनाएण धम्म-पवित्तिं दूसममए तुच्छयरिं भाविणं नाऊण अहिट्ठायगदेवयाहिं गयणमग्गेण सत्तसयदेसे सुद्धदंतीनयरे आणेऊणं भूमिहरए धारिया सा । कालविसमत्तं जाणित्ता रयणमयत्तमवणेऊण पाहाणमई य सा पडिमा विहिया । बहुत[3]रकालाइक्कमे सोधति-वालगच्छे विमलसूरिणो नाम आयरिआ अहेसि(सिं ?) । तेसिं रत्तीए सुमिणे आएसो जाओ । जहा—'इत्थ सिरिपास-सामिपडिमा असुगपएसे भूमिहरट्ठि[4]या चिट्ठइ तं कड्डेऊण पूआवेहित्ति' । तओ तेहिं[5] सावयसंघस्स आइट्ठं । तेण भूमि-हराओ बाहिं नीणिया सा पडिमा । चेइ(ई ?)हरं च कारिअं । ठविआ तत्थ । पूइउ[6]माढत्ता तिक्कालं[7] । कालवसेण उव्वसी-भूआए नयरीए एगया अहिट्ठायगाणं पमत्तत्तणेण तत्थ पसंगागयतुरुक्केहिं भगवओ पासनाहस्स पडिमा दिट्ठा । अणज्जचरिएहिं मत्थयं उत्तारित्ता धरणीए पाडियं ते

१ 'दिट्ठी' A.
२ 'विज्जावि(व ?)हारिणिं' B.
३ 'बहुत्त(त ?)र'
४ 'भूमिहरट्ठिआ' B.
५ 'तेसिं' B.
६ 'इपू(पूइ)उ' B.
७ 'तिकालं' B.

गया ।[3] तओ कालीए चारिंतेण तत्थागएण एगेण अयावालेणं तं देवस्स मत्थयं भूमीए पडिअं दट्ठुं बद्धं[1] सोइत्ता सामि-सरीरस्स उवरिं चडावियं । लग्गं च सलिसंधिरहियं । तं देवयाणुभावेण अज्ज वि तहेव चिट्ठइ पूआरूढं च ।

इय सुद्धदंतिनयरट्ठियस्स सिरिपासनाहदेवस्स ।
सिरिजिणपह[2]सूरीहिं जहासुअं वण्णिओ कप्पो ॥

॥ इति दन्तिदन्तच्छेदशुद्धयशसः श्रीशुद्धदन्तीपार्श्व[3]-नाथस्य कल्पः ॥

॥ ग्रं. १८ ॥

---

१ 'बद्धुं(ऊ?)' B. २ 'जिणप्पह' A.
३ 'पार्श्वनाथकल्पः' A.

**अवन्तिषु** प्रसिद्धस्य सिद्धक्षेत्रतरायतेः।
**अभिनन्दनदेवस्य** कल्पं जल्पामि लेशतः॥ १॥

इह किलेक्ष्वाकुवंशमुक्तामणेः श्री**संवरराज**सूनोः **सिद्धार्था**-कुक्षिसरसीराजहंसस्य कपिलाञ्छनस्य चामीकररुचेः स्वजन्म-पवित्रितश्री**कोशलापुर**स्य सार्द्धधनुःशतत्रितयोच्छ्रायकायस्य चतुर्थतीर्थेश्वरस्य श्रीमद**भिनन्दनदेव**स्य चैत्यं **मालवदे**शान्त-र्वर्त्ति**मङ्गलपुर**प्रत्यासन्नायां महाटवीगतायां **मेद**पल्ल्यामासीत्। तस्यां च विचित्रपापकर्मनिर्माणक[१]र्मठतासा(या?)मजातनिर्वेदा **मेदाः** प्रतिवसन्ति स्म। अन्यदा तुच्छम्लेच्छसैन्येन तत्राप(ग?)त्य भग्नं तज्जिनायतनम्। नवखण्डीकृतं च प्रमद्वरतयाधिष्ठायकानां का(क)लि[२]कालदुर्ललितानामकलनीयतया प्रतिहतप्रणतजनविम्ब-मपि तच्चैत्यालंकारभूतं भगवतोऽ**भिनन्दनदेव**स्य बिंबम्[३]। केचित्पुनः खण्डानीत्याहुः। तानि च शकलानि संजातमनः-खेदैर्मेदैः संमील्य एकत्र प्रदेशे धारितानि। एवं वंहीयसि[४] गतवत्यनेहसि हरहसितगुणग्रामाभिरामात्[५] **धाराड**ग्रामादुपेत्य नित्यं वणिगेकः स्वकलाच्छेको **वड्डजा**भिख्यस्तत्र क्रयाक्रयिकारूपां वणिज्यामकार्षीत्। स च परमार्हतस्ततः प्रत्यहं गच्छमागत्य

---

१ 'कर्म्मनिर्म्मततायां (?) B. २ 'का(क?)लिकाल' A. B.
३ 'बिम्ब(म्बं?)' B. ४ 'एवं[बं?]हीयसि' B.
५ 'ग्रामाभिरामा[त्?]' A. B.

देवमपूपुजत्[१]। स च्छन्नतायां देवपूजायां न जातु बुभुजे।
ततः पल्लीमुपेयिवानेकदानेकदारुणकर्मभिस्तैरभिदधे स श्राद्धः।
किमर्थमन्वहमेविहरेयाहिरां(?) कुरुषे? अस्यामेव पल्ल्यां वणि-
गुचितभोज्यपूरणकल्पवल्ल्यां[२] किं न भुङ्क्षे[३]। ततश्च भणितं
वणिजा। भो राजन्याः? यावदहमर्हतं(न्तं?) देवाधिदेवं त्रिभुवन-
नतमेवं न पश्यामि न पूजयामि च तावन्न वल्भायां प्रगल्भे।
किरातैर्जगदे। यद्येवं देवं प्रति तव निश्चयस्तदा तुभ्यं
दर्शयामस्त्वदभिमतं दैवतम्। वणिजा प्रोचे तथास्तु। तत-
स्तैस्तानि नवापि सप्तापि वा खण्डानि यथावयवन्यासं संयोज्य[४]
दर्शितं भगवतोऽभिनन्दनस्य बिम्बम्। तच्च शुचितरमस्माण-
पाषाणघटितं विलोक्य प्रमुदितमुदितवासनातिशयेन तेन वणि-
व(ग्व?)रेण ऋजु[५]मनसा नमस्कृतस्तिरस्कृतदुरन्तदुरितो भगवान्।
पूजितश्च पुष्पादिभिः चैत्यवन्दना च विरचिता। ततः स
तत्रैव भोजनमकुरुत गुरुतराभिग्रहः। इत्थंकारं प्रतिदिनं
जिनपूजानिष्ठामनुतिष्ठति सति तस्मिन् वणिजि, अपरेद्युरुद्यद्-
विवेकातिरेकवङ्कैर्नाहलैस्तस्मात्किमपि द्रव्यं धनायद्भिस्तद्बिम्ब-
शकलानि युतकीकृत्य क्वचिदपि संगोप्य धृतम्। यावत् पूजावसरे
तां प्रतिमामनालोक्य नासौ बुभुजे। ततस्तेन विषण्णमनसा

---

१ 'अपूपुजन्(त्?)' A. २ 'पल्ली पल्ली(?)'।
३ 'भुंक्ष्वे(ङ्क्षे?)' A. B. ४ 'न्यासं[सं?]योज्य' A. B.
५ 'स(ऋ?)जुमनसा' A.

विहितमपानकमुपवासत्रयम् । अथ स मेदैरपृच्छि किमर्थं नाश्नासि[१] ? । स यथातथमचकथत् । ततः किरातप्रातैरवादि य-द्यस्मभ्यं गुडं ददासि तदा तुभ्यं दर्शयामस्तं देवम् । वणिजा बभणे वितरिष्याम्यवश्यमिति । ततस्तैस्तत्सकलमपि शकलानां नवकं सप्तकं वा प्राग्वत्संयोज्य प्रकटीकृतम् । दृष्टं च तेन संयोज्यमानं तद्बिम्बम् । सुतरां विषादनिषादसंस्पर्शकलुषित-हृदयः समजनि स श्राद्धधुरीणः । तदनु सालि(त्ति?)कतयाभि-ग्रहमग्रहीद् यावदिदं बिम्बमखण्डं न विलोकये तावन्नौदन-मश्नीति । [२]तस्येत्यमनुदिवसमुपवसतस्तद्बिम्बाधिष्ठायकैः स्वप्ने निजगदे—'यदस्य बिम्बस्य नवखण्डसन्धयश्चन्दनलेपेन पूरणी-यास्तत इदमखण्डतामेष्यतीति ।' प्रबुद्धेन तेन प्रातर्जातप्रमो-देन तथैव चक्रे । समपादि भगवानखण्डवपुः । संधयस्तु मिलिताश्चन्दनलेपमात्रेण । क्षणमात्रेण भगवन्तं विशुद्धश्रद्धया संपूज्य भुक्तवान् पण्याजीवः पीवरां मुद[३]मुद्वहन् ददौ च गुडादि मेदेभ्यः । तदनन्तरं तेन वणिजा मणिजातमिव प्राप्य प्रहृष्टेन शून्यखेटके पिप्पलतरोस्तले वेदिकाबन्धं विधाय सा प्रतिमा मण्डिता । ततः प्रभृति श्रावकसङ्घाश्चातुर्वर्ण्यलोका-

---

१ 'नाश्नाति(सि?)' A. B.   २ 'अनुदि[व?]स' B.

३ 'मुदम्' इति B. पुस्तके नास्ति ।

स्ततुर्दिंगन्तादागत्य[1] यात्रोत्सवं सूचयितुं[2] प्रवृत्तास्तत्र **अभय-कीर्तिभानुकीर्तिआंबाराजकुला**स्तत्रमपठ(ठप?)त्याचार्या[3]-श्चैत्यचिन्तां कुर्वते। अथ **प्राग्वाट**वंशावतंसेन **श्रेष्ठा**त्मजेन **साधु-हालाके**न निरपत्येन पुत्रार्थिना विरचितमुपयाचितकम्—'यदि मम सू[4]नुर्जनिता तदात्र चैत्यं कारयिष्यामीति।' क्रमेणाधि-ष्ठायकश्चिद्ग्रसान्निध्यतः पुत्रस्तस्योदपद्यत **कामदेवा**ख्यः। तत-श्चैत्यमुच्चैस्तरशिखरमचीकरत्साधुर्**हालाकः**। क्रमात्साधुर्**भावड**स्य दुहितरं परिणायितः **कामदेवः**। पित्रापि **डाहा**यामादाहूय **मलयसिंहा**दयो देवार्चकाः स्थापिताः। **महणिया**भिख्यो सेवुः(वः?) स्वाङ्गुलीं भगवदुद्देशेन हुत्तवान्। किलाहमस्य भगवतोऽङ्गुलीवर्द्धितः सेवक इति। भगवद्विलेपनचन्दनलगनाच्च तस्याङ्गुलिः पुनर्नवीबभूव। तमतिशयमतिशायिनं निशम्य **श्रीजयसिंहदेवो मालवेश्वरः** स्फुरद्भ[5]क्तिप्राग्भा[6]रभास्वरान्तः-करण[:?]स्वामिनं स्वयमपूपुजत्। देवपूजार्थं चतुर्विंशतिहलकृष्यां भूमिमदत्त मठपतिभ्यः। द्वादशहलवाह्य[7](ह्यां?) चावनीं

१ 'स्वागत्या(त्य?)' B.
२ 'सूचयितु(तुं?)' B.
३ 'मपठ(मठप?)त्याचार्याः' A., 'मठपत्याचार्याः' B.
४ 'म[म?]सूनुः' A.
५ 'स्फुरद्भि(द्भ?)क्ति' B.
६ 'प्राग्भार' इति T. B. पुस्तकयोर्नास्ति।
७ 'हल[वाह्यां?]' B.

देवार्चकेभ्यः प्रददाववन्तिपतिः[१]। अद्यापि दिग्मण्डलव्यापिप्रभाववैभवो भगवानभिनन्दनदेवस्तत्र तथैव पूज्यमानोऽस्ति।

[२]अभिनन्दनदेवस्य कल्प एष यथाश्रुतम्।
अल्पीयान् रचयांचक्रे श्रीजिनप्रभसूरिभिः॥

॥ इति सकलभूवलयनिवासिलोकाभिनन्दनस्य
श्रीअभिनन्दनदेवस्य कल्पः॥

॥ ग्रं. ५३ अ. १८॥

---

१ 'अवन्त(न्ति ?)पतिः' A. B.

२. 'श्रीअभिनन्दनदेव' A. अभिनन्दनदेव B.

श्री[1]**सुव्रतं** जिनं नत्वा प्रतिष्ठां प्रापुषः चितौ ।
**प्रतिष्ठानपुर**स्याभिदध्मः कल्पं यथाश्रुतम् ॥ १ ॥

इह **भारते** वर्षे दक्षिणखण्डे **महाराष्ट्र**देशावतंसं **श्रीमत्प्रतिष्ठानं** नाम पत्तनं विद्यते । तच्च निजभूत्याभिभूतपुरुहूतपुरमपि[2] कालान्तरेण क्षुल्लकग्रामप्रायमजनिष्ट । तत्र चैकदा द्वौ वैदेशिकद्विजौ समागत्य विधवया स्वस्रा साकं कस्यचित् कुम्भकारस्य शालायां तस्थिवांसौ कणवृत्तिं विधाय कणान् स्वसुरुपनीय तत्कृताहारपाकेन समयां (या?) कुरुतः स्म । अन्येद्युः सा तयोर्विप्रयोः स्वसा जलाहरणाय **गोदावरीं** गता । तस्याश्च रूपमप्रतिरूपं निरूप्य स्मरपरवशोऽन्तर्हृद[3]वासी **शेषो** नाम नागराजो ह्रदान्निर्गत्य विहितमनुष्यवपुस्तया सह बलादपि संभोगकेलिमकल[4]यत् । भवितव्यताविलसितेन तस्याः सप्तधातुरहितस्यापि तस्य दिव्यशक्त्या शुक्रपुद्गलसंचाराद्गर्भाधानमभवत् । स्वनामधेयं प्रका[5]श्य 'व्यसनसंकटे मां स्मरे'रित्यभिधाय च नागराजः पाताललोकमगमत् । सा च स्वगृहं प्रत्यगच्छत् व्रीडापीडिततया च स्वभ्रात्रोस्तं वृत्तान्तं न खलु न्यवेदयत् कालक्रमेण सोदर्याभ्यां गर्भलिङ्गानि वीक्ष्य सा जातगर्भेत्य-

---

१ 'श्रीसुव्रतजिनं' A. B. २ 'पु(पु?)रुहूत' A.
३ 'अन्तह्न(र्हृ)द' A. B. ४ 'अकलयत(त्?)' A.
५ 'प्रा(प्र?)काश्यं(श्य?)' A.

लच्यत । ज्यायसस्तु मनसि शङ्का जाता 'यदियं खलु कनीयसोप-भुक्तेति।' शङ्कनीयान्तराभावाद्यवीयसा(सो ?)पि चेति(त ?)सि समजनि विकल्पो 'नूनमेषा ज्यायसा सह विनष्टशीले'त्येवं मिथः कलुषिताशयौ विहाय तामेकाकिनीं पृथक् पृथक्(ग्)-देशान्तरमयासिष्टाम् । सापि प्रवर्द्धमानगर्भा परमन्दिरेषु कर्माणि निर्मिमाणा प्राणवृत्तिमकरोत् । क्रमेण पूर्णेऽनेहसि सर्वलक्षणलक्षिताङ्गं प्रासूत सूनुम् । स च क्रमाद्वपुषा गुणैश्च वर्द्धमानः सवयोभिरमा रममाणो बालक्रीडया स्वयं भूपतीभूय तेभ्यो वाहनानि करितुरगरथादीनि कृत्रिमाणि दत्तवानिति सनोतेर्दानार्थत्वाल्लोकैः **सातवाहन** इति व्यपदेशं लम्भितः । स्वजनन्या पाल्यमानः सुखमवास्थित । इतश्चोज्जयिन्यां **श्रीविक्रमादित्यस्यावन्तिनरेशितुः** सदसि कश्चिन्नैमित्तिकः **सातवाहनं प्रतिष्ठान**पत्तने भाविनं नरेन्द्रमादिक्षत् । अथैतस्यामेव पुर्यामेकः स्थविरविप्रः स्वायुर[1]वसानमवसाय चतुरः स्वतनयानाहूय प्रोक्तवान् । यथा वत्साः! मयि पु(प ?)[2]रेयुषि मदीयशय्योच्छीर्षकदक्षिणपादादारभ्य चतुर्णामपि पादानामधो वर्तमानं निधिकलशचतुष्टयं युष्माभिर्यथाज्येष्ठं विभज्य ग्राह्यम् । येन भवतां निर्वाहः संपनीपद्यते । पुत्रैस्तु तथेत्यादेशः स्वीचक्रे पितुः । तस्मिन्नुपरते तस्यौर्द्धदे[3](दे ?)हिकं कृत्वा त्रयोदशेऽहनि भुवं खात्वा

---

१ 'स्वायु[रवसानम ?]रवसाय' B.

२ 'पु(प ?)रे' A. B.

३ 'तो(नै ?)र्द्ध देहिकं' A. B.

यथायथं चतुरोऽपि निधिकलशांस्ते जगृहिरे। यावदुद्घाट्य निभालयन्ति तावत् प्रथमस्य कुम्भे कनकं, द्वैती[1]यीकस्य कृष्ण-मृत्स्ना, तृतीयस्य बुषं, तुरीयस्य चास्थीनि ददृशिरे। तदनु ज्यायसा साकं इतरे त्रयो विवदन्ते स्म। यदस्मभ्यमपि विभज्य कनकं वितरेति। तस्मिंस्त्वावि[2]तरति सति तेऽवन्ति-पतेर्धर्माधिकरणमुपास्थिषत। तत्रापि न तेषां वादनिर्णयः समपादि। ततस्त्वत्वारोऽपि ते **महाराष्ट्र**जनपदमुपानंसिषुः। **सातवाहन**कुमारस्तु कुलालसद्मा हस्त्यश्वरथसुभटानन्वहं नव-नवान् विदधानः कुलालशालायां बालक्रीडादुर्ललितः कल्पित-स्थितिरनयत्समयम्। ते च द्विजतनुजाः **प्रतिष्ठानपत्तन**मुपेत्य परितस्तस्यामेव चक्रजीवनशालाया(यां?) तस्थिवांसः। **सातवाहन**-कुमारस्तु तानवेत्येङ्गिता[3]कारकुशलः प्रोवाच। भो विप्राः! किं भवन्तो वीचा[4]पन्ना इव वीक्ष्यन्ते। तैस्तु जगदे जगदेकसुभग! कथमिव वयं चिन्ताचान्तचेतसस्त्वयाभाभिमहि। कुमारेण बभणे(णे?)-इङ्गितैः किमिव नावगम्यते। तैरुक्तं युक्तमेतत् परं भवतः पुरो निवेदितेन चिन्ताहेतुना किं स्याद्बालः खलु भवान्। बाल आलपत्। यदि परं जातु मत्तोऽपि साध्यं वः सिद्ध्यति तन्निवेद्यतां स चिन्ताहेतुः। ततस्ते तद्वचनवैचित्री-

---

१ 'द्वे(द्वै)तीयकस्य' A.

२ 'तस्मिंस्त्वावितरति' इति B. पुस्तके नास्ति।

३ 'इङ्गि[ता?]कार' A. B.

४ 'वीच्या(च्चा?)' A. B.

इ(इ?)तदयाः सकलमपि स्वस्वरूपं निधिनिरय[१]णादि मालवेश[२]-परिषद्यपि विवादनिर्णयान्तं तस्मै निवेदितवन्तः । कुमारस्तु स्मितवि[३]च्छुरिताधरोऽवा[४]दीत् । भो विप्राः! अहं यौष्माकं झगटकं निर्णयामि श्रूयतामवहितैः । यस्य तावदस्मा कनककलशः प्रददे स तेनैव निर्वृतोऽस्तु । यस्य कल[५]शे कृष्णमृत्स्ना निरगात्स क्षेत्रकेदारादीन् गृह्णातु[६] । यस्य तु[७] बुशं स कोष्ठागारगत-धान्यानि सर्वाण्यपि स्वीकुरुताम् । यस्य चास्थीनि निरगुः सोऽश्वगोमहिषीवृषभदासीदासादिकमुपादत्तामिति युष्मज्जनक-स्याशयः । इति चौरकण्ठोक्तं श्रुत्वा सूचकण्ठाश्छिन्नविवादा स्तद्वचनं प्रतिश्रुत्य[८] तमनुज्ञाप्य प्रत्याययुः स्वनगरीम् । प्रथिता सा तद्विवादनिर्णयकथा पुर्याम् राज्ञाप्याकार्य पर्यनुयुक्ताः । किं नु[९] भो भवता वादनिर्णयो जातः? तैरुक्तं आम्[१०] स्वामिन्!। केन निर्णीत इति नृपेणोदिते सातवाहनस्वरूपं सर्वमपि [यथा][११] तथमचकथन् । तदाकर्ण्य तस्य शिशोरपि बुद्धिवैभवं विभाव्य प्रागुक्तं दैवज्ञेन तस्य प्रतिष्ठाने राज्यं भविष्यदनुस्मृत्य तं

---

१ 'निरव(?)यणादि' A. २ 'मालवेश्य(श ?)' A.

३ 'विकु(च्छु ?)रिता' A.

४ 'अवादीन्(त् ?)' A. 'अवादीत(त् ?)' B.

५ 'कल[शे ?]' A. ६ 'गृह्णा(ह्णा ?)तु' A. B.

७ 'बु(तु ?) बुशं' B. ८ 'प्रतिश्रुत्यः(त्य ?)' A.

९ 'किंनु(नु ?)' A. १० 'आम(म् ?)' A. B.

११ 'सर्वमपि[यथा ?]तथं' A. B.

स्वप्रतिपन्थिनमाकलय्य क्षुभितमनास्तन्मार[१]णोपयिकमचिन्तयच्चिरं[२] नरेश्वरः। अभिषे(चा?)रादिप्रयोगैर्मारिते चास्मिन् यशःक्षयवृत्ति-र्वती भवेतामिति विचार्य सन्नद्धचतुरङ्गचमूसमूहोऽवन्तिपतिः प्रस्थाय प्रतिष्ठानपत्तनं समवेष्टयत्। तदवलोक्य ते ग्राम्या-स्तत्राश्चिन्तयन्ति स्म। कस्योपर्ययमेतावानाटोपः सकोपस्य मालवेशस्य। न तावदत्र राजा राजन्यो वा वीरस्तादृग् दुर्गादि वेति चिन्तयत्सु तेषु मालवेशप्रहितो दूतः समेत्य सातवाहनमवोचत्[३]। भोः कुमारक[४]! तुभ्यं नृपः क्रुद्धः प्रातस्त्वां मारयिष्यत्यतो युद्धाद्युपायचिन्तनावहितेन भवता भाव्यमिति। स च श्रुत्वापि दूतोक्तीर्निर्भयं निर्भरं क्रीडन्ने-वास्ते[५](स्त)। अत्रान्तरे विदितपरमार्थौ तौ तन्मातुलावितरेतरं प्रति विगतदुर्विकल्पौ पुनः प्रतिष्ठानमागतौ। परचक्रं दृष्ट्वा भगिनीं प्रोचतुः। हे [६]स्वसः! येन दिवौकसा तवायं तनयो दत्तस्तमेव स्मर[७] यथा स एवास्य साहायकं विधत्ते। सापि तद्वचसा प्राचीनं नागपतेर्वचः स्मृत्वा शिरसि निवेशितघटा गोदावर्यां नागह्रदं गत्वा स्नात्वा च तमेव[८] नागनायकमारा-धयत्। तत्क्षणान्नागराजः प्रत्यक्षीभूय वाचमुवाच ब्राह्मणीम्।

---

१ 'मारणो(णौ?)पयिक' A. २ 'चि(च?)रं' B.
३ 'अवोचत(त्?)' A. ४ 'भोः कुमारः(र?)क' B.
५ 'आस्त' A. B. ६ 'स्व[स?]येन' A.
७ 'स्म। [र?]' B. ८ 'न(त?)मेव' A.

को हेतुरद्र[1]मनुसृतस्त्वया। तथा(था)च[2] प्रणम्य यथास्थित-मभिहिते बभाषे शेषराजः। मयि प्रतपति कस्तव तनय-मभिभवितुं क्षमः। इत्युदीर्य तद्घटमादाय ह्रदान्तर्निर्मज्य[3] पीयूषकुण्डात् सुधया घटं प्रपूर्यानीय च तस्मै दत्तवान्। गदितवांश्चानेनामृतेन सातवाहनकृतमृन्मयाश्वरथगजपदाति-जातमभिषिञ्चेः। यथा तत्सजीवं भूत्वा परबलं भनक्ति। त्वत्पुत्रं च प्रतिष्ठानपत्तनराज्ये अयमेव पीयूषघटोऽभिषेक्ष्यति। प्रस्तावे पुनःस्मरणीयोऽहमित्युक्त्वा स्वास्य[4]दमगमद्भुजङ्गपुङ्गवः। सापि सुधाघटमादाय स्वसद्मोपेत्य तेन तन्मृन्मयं सैन्यमदैन्यम-भ्युक्षामास। प्रातर्दिव्यानुभावतः सचेतनीभूय तत्सैन्यं संमुखं गत्वा युयुधे परानीकिन्या सार्द्धम्। तया सातवाहनपृतनया भग्न-मवन्तीशितुर्बलम्। विक्रमनृपतिरपि पलाय्य ययाववन्तीम्। तदनु सातवाहनो राज्येऽभिषिक्तः। प्रतिष्ठानं च पुनर्निज-विभूतिपरिभूतवस्वोकसाराभिमानं धवलगृह-देवगृह-हट्टपङ्क्ति-राजपथ-प्राकारपरिखादिभिः सुनिविष्टम[5]जनिष्ट पत्तनम्। सातवाहनोऽपि क्रमेण दक्षिणापथमनृणं विधाय तापीतीर-

---

१ 'हेतुः(तु ?)रद्रं' B. २ 'तथा(था ?)' A. B.

३ 'निमंज्य(ज्ज्य ?)' A. ४ 'स्वास्थ(स्य ?)' A. B.

५ 'सुविर्न(निवि ?)ष्ट' B.

पर्यन्तं चोत्तरापथं साधयित्वा स्वकीयसंवत्सरं प्रावीवृतत्, जैनस्य समजनि । अपीकरच्च जनितजननयनचैत्यानि जिन-चैत्यानि । पश्चाद्वीरा अपि प्रत्येकं स्वस्वनामाङ्कितान्यन्तर्नगरं कारयांबभूवुर्जिनभवनानि ।

॥ इति प्रतिष्ठा[1]नपत्तनकल्पः ॥[2]

ग्रं. ४७

---

१ 'इति प्रतिष्ठापन(नप ?)त्तनकल्पः' B.

२ A पुस्तके पत्रसमाप्तिहेतुकं 'शुभं भवतु' इति समधिकम् ।

अथ प्रसक्तः परसमयलोकप्रसिद्धं सातवाहनचरित्रलेशमपि किंचिदुच्यते । श्रीसातवाहने चितिं रक्षति पञ्चाशद्वीराः प्रतिष्ठाननगरान्तस्तदा वसन्ति स्म पञ्चाशच्च नगराद्बहिः । इतश्च तत्रैव पुरे एकस्य द्विजस्य सूनुर्दर्पोद्धुरः[१] शूद्रकाख्यः समजनि । स च युद्धश्रमं दर्पात् कुर्वाणः पित्रा स्वकुलानुचितमिदमिति प्रतिषिद्धो नास्थात्[२] । अन्येद्युः सातवाहननृपतिर्वापल्ला-खूंटल्ला-दिपुरान्तर्वर्तिवीरपञ्चाशदन्वितो द्विपञ्चाशद्धस्तप्रमाणां शिलां श्रमार्थमुत्पाटयन् दृष्टः पित्रा समं गच्छता द्वादशाब्ददेशीयेन शूद्रकेण । केनापि वीरेणाङ्गुलचतुष्टयं केनचित् षडङ्गुलान्यपरेण[३] त्वङ्गुलान्यष्टौ शिला भूमित उत्पाटिता । महीजानिना त्वाजानु नीता इत्यवलोक्य[४] शूद्रकः स्फूर्जदूर्जितमवादीत् । भो भो ! भवत्सु मध्ये किं शिलामिमामामस्तकं न कश्चिदुद्धर्तुमीष्टे । तेऽपि सेर्ष्यमवादिषुर्यथा त्वमेवोत्पाटय यदि समर्थमन्योषि । शूद्रकस्तदाकर्ण्य तां शिलां वियति तथोच्छालयांचकार यथा सा दूरमूर्द्धमगमत् । पुनरवादि शूद्रकेण[५] यो भवत्स्वलंभूष्णुः

---

१ 'दर्पोद(ङ्ग ?)रः' A. B.

२ 'नास्थानात्(स्थात् ?)' A. B.

३ 'अपरेण त्वङ्गुलानि' इति B. पुस्तके नास्ति ।

४ 'इत्ये(त्य ?)वलोक्य' A.

५ 'शूद्रकेन' B. 'शूद्रकेन' इत्यारभ्य 'तथा मुष्टिप्रहारेण प्रहृतवान्' इत्यन्तं पाठः A. पुस्तके नास्ति। लेखकदोषेण 'शूद्रकस्तदाकर्ण्य तां शिलां वियति तथोच्छालयांचकार' इति द्विवारं लिखितमिह ।

स खस्त्रिमां निपतन्तीं स्वभात् **सातवाहना**दिवीरैर्भयोद्भ्रान्त-लोचनैर्दृष्टे स एव सानुनयम् । यथा-भो महाबल ! रक्ष रक्षास्माकीनान् प्राणानिति । स पुनस्तां पतयालुं तथा मुष्टि-प्रहारेण प्रहृतवान् यथा सा त्रिखण्डतामन्वभूत् । तत्रैकं शकलं योजनत्रयोपरि न्यपप्त(त ?)त्, द्वैतीयीकं च खण्डं **नागह्रदे** तृतीयं तु प्रतोलीद्वारे चतुष्पथमध्ये निपतितमद्यापि तथैव वीक्ष्यमाणमास्ते जनैः । तद्बलविलसितचमत्कृतचेताः क्षोणिनेता **शूद्रकं** सुतरां सत्कृत्य पुरारक्षकमकरोत् । शस्त्रान्तराणि प्रतिषिध्य दण्डधारस्त[१]स्य दण्डमेवायुधमन्वज्ञासीत् । न (स)[२] च **शूद्रको** बहिश्चरान् वीरान् पुरमध्ये प्रवेष्टुमपि न दत्तवान्, अनर्थ-निवारणार्थम् । अन्यदा स्वसौधस्यो[३]परितले शयानः **सातवाहनः** क्षितिपतिर्मध्यरात्रे शरीरचिन्तार्थमुत्थितः पुराद्बहिःपरिसरे करुणं रुदितमाकर्ण्य तत्प्रवृत्तिमुपलब्धुं कृपाण[४]पाणिः परदुःखदुः[५]खित-हृदयतया गृहान्निरगमत् । अन्तराले **शूद्रके**ना(णा ?)वलोक्य सप्रश्रयं प्रणतः पृष्टश्च महानिशायां निर्गमनकारणम् । धरणी-पतिरवददद्य बहिःपुरप[६]रिसरे करुणक्रन्दितध्वनिः श्रवणाध्वनि पथिकीभावमनुभवन्नस्ति तत्कारणप्रवृत्तिं ज्ञातुं व्रजन्नस्मीति राज्ञोक्ते **शूद्रको** व्यजिज्ञ[७]पत् । देव ! प्रतीक्ष्यपादैः स्वसौधा-

---

१ 'दण्डधारस्तस्य' इति B. पुस्तके नास्ति ।

२ 'न (स ?) च' A. B.

३ 'स्वसौध्य (ध ?)स्य' A.

४ 'कृपाणपाणि [ः]' A.

५ 'पर[दुःख]दुःखित' A.

६ 'पुरपरिसरं' A., 'पुरपरिसर (रे ?)' B.

७ 'व्यजिन्य(ज्ञ ?)पत्' A., 'व्यजिंन्य(ज्ञ ?)पत (त् ?)' B.

लंकरणाय • पादोऽवधार्यतामहमेव तत्प्रवृत्तिमानेष्यामीत्यभि[१]धाय वसुधानायकं व्यावर्त्य[२] स्वयं रुदितध्वन्यनुसारेण पुराद्बहिर्गन्तुं प्रवृत्तः। पुरस्ताद् व्रजन् दत्तकर्णो[३] गोदावर्याः स्रो(स्रो)तसि कंचन रुदन्तमश्रौषीत्। ततः परिकरबन्धं विधाय शूद्रकस्तीर्त्वा यावत्सरितो मध्यं प्रयाति तावत्पयःपूरप्लाव्यमानं नरमेकं रुदन्तं वीक्ष्य बभाषे। भोः! कस्त्वं किमर्थं च रोदिषीत्यभिहितः स नितरामरुदद्दतिनिर्बन्धेन पुनः पृष्टः स्पष्टमा[४]चष्टे भोः साहसिक-शिरोमणे! मामितो निष्काश्य भूपतेः समीपं प्रापय येन तत्र स्ववृत्तमाचक्षे—इत्युक्तः शूद्रकस्तमुत्पाटयितुं यावद्यतिष्ट ताव-न्नोत्पटति स्म सः। ततोऽधस्तात्केनापि यादसा मा विधृतोऽयं भवेदित्याशङ्क्य सद्यः कृपाणिकामधो वाहयामास[५] शूद्रकः[६]। तदनु शिरोमात्रमेव शूद्रकस्योद्धर्त्तुः करतलमारोहत् लघुतया तच्छिरः प्रसरद्रुधिरधारमवलोक्य शूद्रको विषादमापेदान-श्चिन्तयति स्म—धिग्मामप्रहर्तरि प्रहर्तारं शरणागतघातुकं चेत्यात्मानं निन्दन् वज्राहत इव क्षणं मूर्च्छितस्तस्थौ। तदनु समधिगतचैतन्यश्चिरमचिन्तयत् कथमिवैतत् स्वदुश्चेष्टितमवनिपतये

---

१ 'अभिधानाय (धाय)' B.

२ 'व्यावर्त्त्य (वर्त्य?)' A., 'व्यावृत्त्य (वर्त्य?)' B.

३ 'दत्तकर्णौ (र्णो?)' A. B.

४ 'आचष्ट' T. B., 'आचष्टे' A.

५ 'वाहया (या?) मास' A.

६ 'शूद्रकः। इत्यारभ्य—'प्रसरद्रुधिरधारमवलोक्य' इत्यन्तं A. पुस्तके नास्ति।

निवेदयिष्यामीति लज्जितमनास्तत्रैव काष्ठैश्चितां विरचय्य तत्र ज्वलनं प्रज्वाल्य तच्छिरः सह गृहीत्वा यावदुदर्चिषि प्रवेष्टुं[1] प्रवृत्ते तावत्तेन मस्तकेन निजगदे—भो महापुरुष ! किमर्थमित्थं व्यवसीयते भवता यावदहं शिरोमात्रमेवास्मि सैंहिकेयवत्सदा। तद्वृथा मा विषीद प्रसीद, मां राज्ञः समीपमुपनयेति तद्वचनं निशम्य चमत्कृतचित्तः प्राणित्ययमिति प्रहृष्टः शूद्रकस्तच्छिरः पट्टांशुकवेष्टितं विधाय प्रातः सातवाहनमुपानमत्। अपृच्छदथ पृथ्वीनाथः—शूद्रक ! किमिदम्। सोऽप्यवोचत्। देव ! सोऽयं यस्य क्रन्दितध्वनिर्दैवेन रात्रौ शुश्रुवे इत्युक्त्वा तस्य प्रागुक्तं वृत्तं सकलमावेदयत्। [2]पुना राजा तमेव मस्तकमप्राक्षीत् भोः ! कस्त्वं किमर्थं चात्र भवदागमनमिति। तेनाभिदधे महाराज ! भवतः कीर्तिसुभाकर्णि समाकर्ण्य करुणरुदितव्याजेनात्मानं ज्ञापयित्वा त्वामहमुपागमं दृष्टश्च भवान्, कृतार्थे मेऽद्य चक्षुषी जाते इति। कां कलां सम्यगवगच्छसीति राज्ञा पृष्टे तेनोक्तं देव ! गीत[3]कलां वेद्मि। ततो राज्ञ आज्ञया निरवगीतं गीतं गातुं प्रचक्रमे। क्रमेण तद्गानकलया मोहिता[4] सकलापि नृपतिप्रमुखा परिषत्। स च मायासुरनामकोऽसुरस्तां मायां निर्माय महीपतेर्महिषीं महनीयरूपधेयामपजिहीर्षुरुपागतो बभूव। न च विदितचरमेतत्कस्यापि। लोकैस्तु शीर्षमात्रदर्शनात्तस्य प्राकृतभाषया

---

१ 'प्रवेष्टं (ष्टुं ?)' A.  २ 'पुन (ना) राजा' A.

३ 'गीतकला (लां ?)' B.

४ 'मोहितापि सकलापि' A. B.

'सीमुला' इति व्यपदेशः कृतः। तदनु प्रतिदिनं तस्मि-न्नतितुम्ब(म्बु?)रौ मधुरतरं गायति सति श्रुतं तत्स्वरूपं महा-देव्या। दासीमुखेन भूयं विज्ञ(ज्ञा?)प्य [1]तच्छीर्षं स्वान्तिक-मानायितम्। प्रत्यहं तमश्रौषत् राज्ञी। दिनान्तरे रात्रौ प्रस्तावमासाद्य सद्य एवापहरति स्म तां मायासुरः। आरोपया-मास च तां घण्टावलम्बिनामनि स्वविमाने। राज्ञी च करुणं क्रन्दितुमारेभे। हा[2]हं केनाप्यपह्रियं? अस्ति कोऽपि वीरः पृथिव्यां यो मां मोचयति। तच्च खूंद[3]त्ताभिख्येन वीरेण श्रुत्वा धावित्वा व्योमन्युत्पत्य च तद्विमानस्य घण्टा पाणिना गाढ-मधार्यत। ततस्तत्प्राणेनावष्टब्धं विमानं पुरस्तान्न प्राचा[4]लीत्। तदनु चिन्तितं मायासुरेण किमर्थं विमानमेतन्न सर्पति?। यावदद्राक्षीत् तं वीरं हस्तावलम्बितघण्टं ततः खड्गेन तद्-हस्त[5]मच्छिदत्। पतितः पृथिव्यां वीरः। स चासुरः पुरः प्राचलत्। ततो विदितदेव्यपहारवृत्तान्तः क्षितिकान्तः पञ्चा-शतमेकोनां(नान्?) वीरानादिक्षत्—यत्पट्टदेव्याः शुद्धिः क्रियतां केनेयमपहृतेति। ते प्रागपि शू[6]द्रकं प्रत्यसूयापराः प्रोचु-र्महाराज! शूद्रक एव जानीते ते[7]नैव तच्छीर्षकमा[8]नीतं तेनैव च देवी जह्रे। ततो नृपतिस्तस्मै कुपितः शूलारोपण-

---

[1] 'तच्छीर्षं' A. B. [2] 'हो (हा?)' A.

[3] 'खं (खूं?) दत्ता' B. [4] 'प्र (प्रा?)चालीत्' B.

[5] 'हस्तमं (म?) च्छिदत्' A. B.

[6] 'सू (शू?)द्रकं' B. [7] 'ने(ते?)नैव' A. B.

[8] 'आनीत (तं?)' B.

माज्ञाप[1]यत(त्) । तदनु देशरीतिवशात्तं रक्तचन्दनानुलिप्ताङ्गं शकटे [2]शा[य]यित्वा तेन सह गाढं बद्ध्वा शूलाये याव-द्राजपुरुषाश्चेलुस्तावत् पश्चाशदपि वीरा(:?) संभूय शूद्रक-मवोचत्(न्) । भो महावीर ! किमर्थमेवं[3] रण्डे[4]व म्रियते भवान् । अशुभस्य कालहरणमिति न्यायात् मार्गय नरेन्द्रा-त्कतिपयदिनावधिम् । शोधय. सर्वत्र देव्यपहारिणं[5] किमकाण्ड एव स्वकीयां वीरत्वकीर्तिमपनयसि । तेनोक्तं गम्यतां तर्हि उपराजं विज्ञ[ा]प्यतामेतमर्थं राजा । तैरपि तथाकृते प्रत्याना-यितः शूद्रकः क्षितीन्द्रेण । तेनापि स्वमुखेन विज्ञप्तिः कृता । महाराज ! दीयतामवधिर्येन विचिनोमि प्रतिदेशं देवीं त[6]-दपहारिणं च । राज्ञा दिनदशकमवधिर्दत्तः । शूद्रकगृहे च सारमेयद्वयमासीत् तत्सहचारि । नृपतिरवददेतद्भषणयुगलं प्रतिभू-प्राय[7]मस्मत्पार्श्वे मुञ्च, स्वयं पुनर्भवान् देव्युदन्तोपलब्धये हिण्डतां महीमण्डलम् । सोऽप्यादेशः प्रमाणमित्युदीर्य वीर्यवान् प्रतस्थे । भूचक्रशक्रस्तत्कौलेयकद्वन्द्वं शृङ्खलाबद्धं स्वशय्यापादयोरबध्नात् । शूद्रकस्तु परितः पर्यटाट्यमानोऽपि यावत् प्रस्तुतार्थस्य वार्तामात्र-मपि क्वापि नोप[8]लेभे तावदचिन्तयदहो ! ममेदमपय[9]शः

---

१ 'आज्ञापयत्' B. २ 'शाययित्वा' B.
३ 'एव (वं?)' B. ४ 'म्रि(?)रण्डेव म्रियते' A.
५ 'देव्यपरिहा(पहा?)रिणं' A.
६ 'तदपि (प?) हारिणं' A.
७ 'प्रति प्राभूय (तिभूप्राय?)' A.
८ 'नोपलो(ले?)भे' A. ९ 'अयशः' B.

प्रादुरभूद् यदयं स्वामिद्रोही मध्ये भूत्वा देवीमपा[१]जीहरदिति। न च क्वापि शुद्धिर्लब्धा[२] तस्याः। तस्मान्मरणमेव शरणमिति विमृश्य दारुभिश्चितामरचय[३]ज्ज्वलनं चाज्वालयत्। यावन्मध्ये प्राविशत्तावत्ताभ्यां शुनकाभ्यां देवताधिष्ठिताभ्यां ज्ञातं यदस्मदधि-पतिर्निधनं धनायन्नस्तीति। ततो दैवतशक्त्या शृङ्खलानि भङ्क्त्वा निर्विलम्बं गतौ तौ तत्र यत्रासीच्छूद्रकर[४]चिता चिता। दशनैः केशानाकृष्य शूद्रकं बहिर्निष्काश(स)यामासतुः[५]। तेनाप्यकस्मात् तौ विलोक्य विस्मितमनसा निजगदे—रे पापीयांसौ! किमेतत् कृतं भवद्भ्यामशुभवद्भ्याम्। राज्ञो मनसि विश्वासनिरासो भविष्यति। यत् प्रतिभुवावपि तेनात्मना सह नीताविति। भषणाभ्यां बभाषे—धीरो भव। अस्मद्दर्शितां दिशम[६]नुसर सरभसं का चिन्ता तवेत्यभिधाय पुरोभूय प्रस्थितौ तेन सार्द्धम्। क्रमात् प्राप्तौ **कोल्लापुरम्**। तत्रस्थं **महालक्ष्मी**-देव्या भवनं प्रविष्टौ। तत्र शूद्रकस्तां देवीमभ्यर्च्य कुशस्रस्तरासीन-स्त्रिरात्रमुपावसत्। तदनु प्रत्यक्षीभूय भगवती **महालक्ष्मी**-स्त[७]मवोचत्। वत्स! किं मृगयसे। शूद्रकेणोक्तं स्वामिनि!

---

१ 'उ(अ?)पाजीहरत्' A. B.

२ 'लब्धः (ब्धा?)' B.

३ 'अरचयज्ज्व(ज्ज्व?)लनं' A.

४ 'रचिता [चिता]' A.

५ 'निष्कासयामासतुः' A. B.

६ 'मनुसर' इति द्विवारं लेखकदोषेण B. पुस्तके।

७ 'महालक्ष्मीं(क्ष्मी?)स्तं' B.

सातवाहनमहीपालमहिष्याः शुद्धिं वद क्वास्ते केनेयमपहृता। श्रीदेव्योदितं—सर्वान् यक्षराक्षसभूतादिदैवगणान् संमील्य तत्प्रवृत्तिमहं निवेदयिष्यामि। परं तेषां कृते त्वया बल्युपहारादि प्रगुणीकृत्य धार्यं यावच्च ते कणेहत्य बल्याद्यु[1]पभुज्य प्रीता न भवेयुस्तावत्त्वया विघ्ना रक्ष[2]णीयाः। ततः शूद्रकस्तेषां दे(दै?)वतानां[3] तर्पणार्थं कुण्डं विरचय्य होममारेभे। मिलिताः सकलदैवतगणाः स्वां स्वां भुक्तिमग्निमुखेन जगृहे(हुः?)। तावत्तद्धोमधूमः प्रसृमरः प्राप तत्स्थानं यत्र मायासुरोऽभूत्। तेनापि परिज्ञातत्व[तत्त्व?]त्तस्यादिष्टशूद्रकहोमस्वरूपेण प्रेषितः स्वभ्राता कोल्लासुरनामा होमप्रत्यूहकरणाय। समागतश्च वियति कोल्लासुरः स्वसेनया समम्। दृष्टश्च दैवतगणैश्चकितं च तैः। ततो भषणौ[4] दिव्यशक्त्या युयुधाते दैत्यैः सह। क्रमात् मारितौ च तौ दैत्यैः। ततः शूद्रकः स्वयं योद्धुं प्रावृतत[5](त्)। क्रमेण दण्डव्यतिरिक्तप्रहा(ह?)र[6]णान्तराभावाद्दण्डेनैव बहून्निधनं नीतवानसुरान्। ततो दक्षिणबाहुं दैत्या[7]स्तस्य चिच्छिदुः। पुनर्वामदोष्णैव[8] दण्डयुद्धमकरोत्। तस्मिन्नपि छिन्ने दक्षिणाङ्घ्रिणो[9]पात्तदण्डो योद्धुं लग्नः। तथापि दैत्यैर्लूने वाम[10]-

---

[1] 'बल्यादु(द्यु?)पभुज्य' A.
[2] 'रक्षणीया(:)' A. B.
[3] 'दे(दै?)वतानां' A. B.
[4] 'भषणे(णौ?)' B.
[5] 'प्रावृतत्' A. B.
[6] 'प्रहरण्य(णा?)' B.
[7] 'तस्य' इति B. पुस्तके नास्ति।
[8] 'वामदोष्णे(ष्णै?)व' A.
[9] 'दक्षिणांघ्रि(घ्रि?)णो' A. B.
[10] 'वामपदत्र(दात्त?)' A., 'वामपद...यष्टिः' B.

पदात्तयष्टिरयुध्यत। तमपि क्रमादच्छिदसुराः[१]। ततो दन्तैर्दण्डमादाय युयुधे। ततस्तैर्मस्तकमच्छेदि। अथाकण्ठदष्टा देवगणास्तं शूद्रकं[२] भूमिपतितशिरस्कं दृष्ट्वा अहो! अस्मद्भक्तिदातुर्वराकस्यास्य[३] किं जातमिति परितप्य योद्धुं प्रवृत्ताः कोल्लासुरममारयन्। ततः श्रीदेव्या अमृतेनाभिषिच्य पुनरनुसंहिताङ्गस्कन्धे[४] शूद्रकः प्रत्युज्जीवितश्च। सारमेयावपि पुनर्जीवितौ। देवी च प्रसन्ना सती तस्मै खड्गरत्नं[५]प्रददौ, अनेन त्वमजय्यो भविष्यसीति च वरं व्यतरत्। ततो महालक्ष्म्यादिदेवतगणैः सह सातवाहनदेव्याः शुद्ध्यर्थं समग्रमपि भुवनं परिभ्राम्य प्राप्तः शूद्रको महार्णवम्। तत्र चैकं वटतरुमुच्चैस्तरं निरीक्ष्य विश्रामार्थमारुरोह। यावत्पश्यति तच्छाखायां लम्बमानमधःशिरसं काष्ठकीलिकाप्रवेशितो[६]र्द्ध्वपादं पुरुषमेकम्। स च प्रसारितजिह्वोऽन्तर्जलं विचरतो[७] जलचरादीन् भक्षयन् जीवितस्तैः। पृष्टश्च शूद्रकेण[८]—कस्त्वं किमर्थं चेत्थं लम्बितोऽसि। तेनोक्तमहं मायासुरस्य कनिष्ठो भ्राता। स च मदगोन्मदिष्णुर्मदग्रजः प्रतिष्ठानाधिपतेः सातवाहनस्य महिषीं रिरंसु[९]रपाहरत् सीतामिव दशवदनः। सा च

---

१ 'अच्छि(च्छि ?) [द]न्नसुराः' B. २ 'शूद्रं' B.

३ 'अस्य' इति A. पुस्तके नास्ति।

४ 'स्कंद्रे(स्कन्धे ?)' B. ५ 'ददौ' B.

६ 'प्रवेशितोर्द्ध(र्द्ध्व ?)पादं' A. B.

७ 'विरच (चर ?)तो' B. ८ 'शूद्रकेन(ण ?)' A. B.

९ 'रिरंसंसुः(रिरंसुः ?)' A.

पतिव्रता तन्नेच्छति। तदनु मया प्रोक्तोऽग्रजन्मा, न युज्यते परदारापहरणं तव।

"विक्रमाक्रान्तविश्वोऽपि परस्त्रीषु रिरंसया।
कृत्वा कुलक्षयं प्राप नरकं **दशकंधरः**॥"

इत्यादिभिर्वा[1]ग्भिर्निषिद्धः क्रुद्धो मह्यं **मायासुरो**ऽस्यां वटशाखायां टङ्कित्वा मामित्थं व्यडम्बयत्। अहं च प्रसारितरसनः समुद्रान्तःसंचरतो[2] जलचरादीनभ्यवहरन् प्राणयात्रां करोमीति श्रुत्वा **शूद्रको**[3]ऽप्यभाणीदहं तस्यैव मत्सीभर्तो भृत्यः **शूद्रक**नामा। तामेव देवीमन्वेष्टुमागतोऽस्मि। तेनोक्तमेवं चेत्तर्हि मां मोचयत यथा[4]हं सह भूत्वा तं दर्शयामि तां च देवीम्। तेन स्वस्थानं परितो जातुषं दुर्गं कारितमस्ति। तच्च निरन्तरं प्रज्वलदेवास्ति। ततस्तदुल्लङ्घ्य मध्ये प्रविश्य तं निपात्य देवी प्रत्याहर्तव्या इत्याकर्ण्य **शूद्रक**स्तेन कृपाणेन तत्काष्ठबन्धनानि च्छित्त्वा तं पुरोधाय[5] दैवतगणपरिवृतः प्रस्थाय प्राकारमुल्लङ्घ्य तत्स्थानान्तः प्राविशत्। दैवतगणांश्चावलोक्य **मायासुरः** स्वसैन्यं युद्धाय प्रजिघाय। तस्मिन् पञ्चतामञ्चिते स्वयं योद्धुमुपतस्थे। ततः क्रमेण **शूद्रक**स्तेनासिना तमवधीत्। ततो **घण्टावलम्बि**विमानमारोप्य देवीं[6] दैवतगणैः सत्रा प्रस्थितः **प्रतिष्ठानं** प्रति।

---

१ 'इत्यादि(भि ?)र्वाग्भिः' A.
२ 'संचरं(र ?)तो' A.
३ 'शूद्रो(द्रको ?)' B.
४ 'तथाहं' B.
५ 'प(पु ?)रोधाय' B.
६ 'देवी(वीं)' B.

इतश्च दशमं[1] दिनम[2]वधीकृतमागतमवगत्य जगत्यधिपति-र्ध्यातवान्। अहो न मम महादेवी न च शूद्रकवीरो नापि च तौ रसना[3]लिङ्गौ। सर्वं मयैव कुबुद्धिना विनाशित-मिति प्रोच[य]न्[4] सपरिच्छद एव प्राणत्याग(गं) चिकी:(कीर्षुः) पुराद्बहिश्चितामरचयच्चन्दनादिदारुभिः। यावत् क्षणाद्बहुशुक्षणिं क्षेप्स्यति परिजनस्थितौ तावद्धर्षपकः एको देवगणमध्यात्समायासीत्, व्यजिज्ञपच्च, सप्रश्रयम्। देव! दिष्ट्या [5]वर्द्धसे महादेव्या-गमनेन। तन्निशम्य श्रम(व)ण[6]रम्यं नरेश्वरः स्फुरदानन्दकन्दलित-हृदय ऊर्ध्वमवलोकयन्नालुलोके नभसि दैवतगणं शूद्रकं च। अयमपि विमानादवतीर्य राज्ञः पदोर[7]पतत् महा[8]देवी च। अभिन[9]नन्द सानन्दं मेदिनीन्दुः[10] शूद्रकं राज्यार्द्धं च तस्मै प्रादित[11]। सोत्सवमन्तर्नगरं प्रविश्य श्रुतशूद्रकचारुचरित[12](:) सह महिष्या राज्यश्रियमुपबुभुजे महाभुजः।

इत्थंकारं नानाविधानान्यवदानानि हालक्षितिपालस्य कियन्ति नाम व्यावर्णयितुं पार्यन्ते। स्थापिता चानेन गोदावरीसरित्तीरे

---

१ 'दशं(शमं ?)' A.
२ 'दिन[म ?]वधीकृत्य' B.
३ 'रसनाश्लौलि(लिङ्गौ ?)' B.
४ 'प्रोचयन्' B.
५ 'वर्द्धसे' B.
६ 'श्रम(व ?)ण' A.
७ 'पदो[र ?]पतत्' A. B.
८ 'महादी(दे ?)वी' A.
९ 'अभिननन्दन(ननन्द ?)' B.
१० 'मेद(दि ?)नीन्दुः' A. 'मेदिनीं...:' B.
११ 'प्रादिता(त ?)' A.
१२ 'चरित[:]' A. B.

मुद्दालक्ष्मीः। प्रासादे अन्यान्यपि यथार्हं देवतानि निवेशितानि[1] तत्तत्स्थानेषु। राज्यं प्राज्यं चिरं भुञ्जाने जगतीजानावन्यदा कश्चिद्दारुभारवाहकः[2] कस्यचिद्वणिजस्य[3](जो) वीथ्यां प्रत्यहं वाहणि दारुण्याहृत्य विक्रीणीते स्म। दिनान्तरे च तस्मिन्नुपे[4]युषि वणिजा तद्भगिनी पृष्टा किमर्थं भवद्भ्राताद्य नागतो मदीय्या[5]म्। तया बभाणे श्रेष्ठिश्रेष्ठ! मत्सोदर्यः स्वर्गिषु संप्रति प्रतिवसति। वणिगभणत्कथमिव। सावद[6]त्कङ्कणबन्धादारभ्य विवाहप्रकरणे दिनचतुष्टयं[7] नरः स्वर्गिष्विव वसन्तमात्मानं मन्यते तत्तदुत्सवालोकनकौतूह[8]लात्। तच्चाकर्ण्य राजाप्यचिन्तयदहो अहं किं न स्वर्गिषु वसामि। चतुर्षु दिनेष्वनवरतं विवाहोत्सवमय एव स्थास्यामीति विचार्य चातुर्वर्ण्ये यां यां कन्यां युवतिं वा रूपशालिनीं पश्यति शृणोति स्म वा तां तां सोत्सवं पर्यणैषीत्। एवं च भूयस्यनेहसि [9]गच्छति लोकैश्चिन्तितमहो! कथं भाव्यमनपत्यैरेव सर्ववर्णैः स्थेयम्, सर्वकन्यास्तावद्राजैव विवोढा योषिदभावे च कुतः सन्ततिरिति। एवं विषण्णेषु[10] लोकेषु **विवाहवाटिकानाम्नि** ग्रामे वास्तव्य एको द्विजः **पीठजादेवीमाराध्य** व्यजिज्ञपत्—भगवति! कथं विवाहकर्मास्मदपत्यानां भावीति। देव्योक्तं भो वाडव! लङ्कवनेऽहमात्मानं कन्यारूपं कृत्वावतरिष्यामि।

---

१ '[नि ?]वेशितानि' A.
२ 'हार(वाह ?)कः' A.
३ 'वणिजस्य(जो)' A. B.
४ 'तस्मिन्नु(न्नु ?)पेयुषि' A.
५ 'मदीय्या' B.
६ 'सा च(व)[द ?]त्' B.
७ 'चतुष्टय(यं)' A. B.
८ 'को(कौ ?)तूहलात्' B.
९ 'गच्छं(च्छ ?)ति' B.
१० 'विषन्ने(ण्णे ?)षु' A. B.

यदा मां राजा प्रार्थयते तदाहं तस्मै देया शेषमहं भक्षि(क्षि ?)ष्ये। तथैव राजा तां रूपवतीं श्रुत्वा विप्रमयाचत। सोऽपि जगाद दत्ता मया परं महाराज! अत्रा[1]गत्य मत्कन्योद्वोढव्या। प्रतिपन्नं राज्ञा। गणकदत्ते लग्ने क्रमाद्विवाहाय प्रचलितः प्राप्तश्च तं ग्रामं श्वशुरकुलं च नृपतिः। देशाचा[2]रानुरोधाद्वधू-वरयोरन्तराले जवनिका दत्ता। अञ्जलि[3]युगं[4]धरैर्लाजैर्भृतो लग्नवेलायां तिरस्करिणीमपनीय यावदन्योन्यस्य शिरसि लाजान् विकि[5]रीतुं प्रवृत्तौ तदनु[6] किल हस्त[7]ले(मेला)पो भविष्य[8]तीति। तावद्राजा तां रौद्ररूपां राक्षसीमिवैक्षिष्ट। ते च लाजाः कठिनपाषाणकर्कररूपा राज्ञः शिरसि लगितुं लग्नाः। क्षिति-पतिरपि किमपि विकृत[9]मिदमिति विभावयन् पलायित-स्तावत् सा पृष्ठलग्नाश्मशकलानि वर्षन्ती प्राप्ता। ततो[10] नर-पतिर्नागह्रदं प्राविशन्निजजन्मभूमिम्। तत्रैव च निधनमानशे इति। अद्यापि सा पीठजा-देवी प्रतोल्या बहिरास्ते निज-प्रासादस्था। शूद्रकोऽपि क्रमेण कालिकादेव्याऽजारूपं विकृत्य वापीं प्रविष्टया करुणरसितेन विप्रलभ्य तन्निष्कासनार्थं प्रवि[11]शन् पतितस्य तस्य कृपाणस्य कूपद्वारे तिर्यक्पतनाच्छिन्ना[12]ङ्गः पञ्चता-

---

१ 'म(त्र ?)त्रा' A. B.
२ 'देशाचा[रा ?]नुरोधात्' B.
३ 'अञ्जली: (लिः ?)' A.
४ 'युगंधरै(रौ ?) लाजैः' B.
५ 'विक(कि ?)रीतुं' A. B.
६ 'त[द ?]नु' B.
७ 'हस्तले(मेला ?)पो' A. B.
८ 'भविष्यसी(ती ?)ति' B.
९ 'वैकृतं' B.
१० 'तनो(तो ?)' B.
११ 'प्रति(वि ?)शन्' B.
१२ 'छिन्नागाः(ङ्गः ?)' A.

मानम्। महालक्ष्म्या हि वरवितरणावसरेऽस्मादेव कौशेयकान्तव दिष्टान्तावाप्तिर्भविनीत्यादिष्टमासीत्। ततः शक्तिकुमारो राज्येऽभिषिक्तः सातवाहनायनिः। तदनन्तरमद्यापि राजा न कश्चित्प्रतिष्ठाने प्रविशति वीरक्षेत्रे इति।

अत्र च यदसंभाव्यं क्वचिदूचे तत्र परसमय एव मन्तव्यो हेतुर्यन्नासंगतवाग्जनो जैनः॥

इति प्रतिष्ठान[१]कल्पः प्रसङ्गतः सा[२]तवाहनचरित्रलेशश्च विरचितः श्रीजिनप्रभसूरिभिः॥

च[३]क्रे प्रतिष्ठानकल्पः श्रीजिनप्रभसूरिभिः।
सातवाहनभूपस्य कथांशश्च प्रसङ्गतः॥

ग्रं. १६६। अ. ८॥

---

१ 'प्र[ति ?]ष्ठान' A.

२ 'सातवाहनचरितलेशश्च जिनप्रभसूरिभिः' इति A. पुस्तके नास्ति।

३ 'पद्यस्यास्य पूर्वार्द्धं' A. पुस्तके नास्ति।

कृतदुर्नयभङ्गानामङ्गानां जनपदस्य भूषायाः[१] ।
चम्पापुर्याः कल्पं जल्पामस्तीर्थपु( धु ? )र्यायाः ॥

अस्यां द्वादश[२]जिनेन्द्रस्य श्री[३]वासुपूज्यस्य त्रिभुवनजनपूज्यानि गर्भावतारजन्मप्रव्रज्याकेवलज्ञाननिर्वाणोपगमलक्षणानि पञ्चकल्याणकानि जज्ञिरे ॥ १ ॥

अस्यामेव श्रीवासुपूज्यजिनेन्द्रपुत्रमघवनृपतिपुत्री ल[४]क्ष्मी-कुक्षिजाता रोहिणी नाम कन्याऽष्टानां पुत्राणामुपरि जज्ञे । सा च स्वयंवरेऽशोकराजन्यकण्ठे वरमालां निक्षिप्य तं परिणीय पट्टराज्ञी जाता । क्रमेणाष्टौ पुत्रांस्तत्रस्य पुत्रीरजीजनत् ॥ २ ॥

अन्यदा [श्री][५]वासुपूज्यशिष्ययो रूप्यकुम्भस्वर्णकुम्भयोर्मुखाददृष्ट[६]दुःखत्वे हेतुं प्राग्जन्मचीर्णं रोहिणीतपः श्रुत्वा सोद्या-पन[७]विधिं प्राचीकशत्, मुक्तिं च सपरिच्छदाऽगच्छत् ॥ ३ ॥

अस्यां करकण्डुनामधेयो भूमण्डलाखण्डलः पुरासीद् यः कादम्बर्यामटव्यां कलिगिरे[८]रुपत्यकावर्तिनि कुण्डनाम्नि सरोवरे श्रीपार्श्वनाथं छद्मस्थावस्थायां विहरन्तं हस्तिव्यन्तरानुभावात् कलिकुण्डतीर्थतया प्रतिष्ठापितवान् ॥ ४ ॥

अस्यां सुभद्रा महासती पाषाणमयविकटकपाटमयसंपुटपिहितास्तिस्रः प्रतोलीः शीलमाहात्म्यादामसूत्रतन्तुवेष्टितेन तित-

---

१ 'भूख्याया[ः]' B.
२ 'द्वादशम' A. B.
३ 'श्रीमेव(?) वासुपूज्यस्य' B.
४ 'क्ष्मील (लक्ष्मी ?)' B.
५ 'श्रीवासुपूज्य' B.
६ 'अदृष्टः(ष्ट ?)' B.
७ 'सोद्यापनविधि' B.
८ 'किलिगिरे' B.

घना, कूपाज्जलमाकृष्य तेनाभिषिच्य सप्रभावनमुद्घा(द्घा)[१]टयत्। एकां तु तुरीयां प्रतोलीमन्यापि या किल मत्सदृशी सुचरित्रा भवति तये[२]यमुद्घाटनीयेति भणित्वा राजादिजनसमक्षं तथैव पिहितामेवास्थापयत्। सा च तद्दिनादारभ्य चिरकालं तथैव दृष्टा जनतया। क्रमेण[३] विक्रमादित्यवर्षेषु[४] षष्ट्यधिकत्रयोदशशतेष्वतिक्रान्तेषु [वि. सं १३६०] लक्षणावतीहम्मीर-श्रीसुरत्राणसमसदीनः शंक[५]रपुरदुर्गोपयोगिपाषाण[६]ग्रहणार्थं प्रतोलीं पातयित्वा कपाटसंपुटमग्रहीत्॥ ५॥

अस्यां दधिवाहननृपतिर्महिष्या पद्मावत्या सह तद्दोहद-पूरणार्थमनेकपारूढः संचरन् स्मृतारण्यानीविहारेण करिणा तां प्रति व्रजताऽपवाहितः स्वयं तरुशाखामालम्ब्य स्थितः। करिणि पुरः संचरिते व्यावृत्त्येमामेव स्वपुरीमागमत्। देवी चासामर्थ्यात्तदारूढैवार[७]ण्यानीमगात्। तदवतीर्णा क्रमेण सूनुं सुषुवे। स च करकन्[८]दु(ण्डु)र्नाम क्षितिपतिरजनि कलिङ्गेषु। पित्रा सार्द्धं युद्ध(ध्य?)मानः प्रतिषिद्ध आर्यया जनन्या। क्रमेण महावृषभस्य यौवनवार्द्धक[९]दर्शनाज्जातः प्रत्येकबुद्धः सिद्धिं चाससाद॥ ६॥

अस्यां चन्दनबाला दधिवाहननृपतिनन्दनी जन्मसु(उ)प-लेभे। या किल भगवतः श्रीमहावीरस्य कौशाम्ब्यां सूर्प-

१ 'उद्घाट[य?]न् (त्?) A. B. २ 'त...य' B.
३ 'क्रि(क्र?)मेण' B. ४ 'वर्षेसु(षु?)' B.
५ 'शङ्करप(पु?)र' A. ६ 'पाषाणग्रहार्थं' B.
७ 'अख(र?) ण्यानी' A. ८ 'करकण्डुः' A. B.
९ 'वार्द्धकदशादर्शनाज्जातः' B.

कोणस्थकुल्माषैः पारणाकारणया पञ्चदिनोनषण्मासावसाने द्रव्यक्षेत्र-कालभावाभिग्रहानपूरयत् ॥ ७ ॥

अस्यां पृष्टचम्पया सह श्रीवीरस्त्रीणि वर्षारात्रसमव-सरणानि चक्रे ॥ ८ ॥

अस्या एव परिसरे श्रीश्रेणिकसूनुरशोक[1]चन्द्रो नरेन्द्रः कूणिकापराख्यः श्रीराजगृहं जनकशोकादिहाय नवीनां चम्पामचीकरच्चारुचम्पकरोचिष्णुं राजधानीम् ॥ ९ ॥

अस्यामेव पाण्डुकुलमण्डनो दानशौण्डे[2]षु दृष्टान्तः श्रीकर्ण-नृपतिरशाद्राज्यश्रियम्। दृश्यन्ते चाद्यापि तानि तानि तदव-दानस्थानानि शृङ्गारचतुरि[3]कादीनि पुर्यामस्याम् ॥ १० ॥

अस्यां सम्यग्दृशां निदर्शनं सुदर्शनश्रेष्ठी दधिवाहन-भूपस्य राज्ञ्याऽभयाख्यया संभोगार्थमुपसर्ग्यमाणः क्षितिपतिवचसा वधार्थं नीतः। स्वकीयनिष्क[4]म्पशीलसम्पन्नप्रभावाकृष्टशासनदेवता-सान्निध्यात् शूलं हैमसिंहा[5]सन[ता ?]मनैषीत्, तरवारिं च निशितं सुरभिसुमनोदामभू[6]यमनयत् ॥ ११ ॥

अस्यां च कामदेवः श्रेष्ठी श्रीवीरस्योपासकाग्रणीरष्टा-दशकनककोटिस्वामी गोदशसहस्रयुतषड्गोकुलाधिपतिर्भद्रापति-

---

१ 'अशोकवंशे' B. २ '...न शौण्डेषु' B.
३ 'चतुर(रि ?)कादीनि' A. B. ४ 'निःकम्प' A. B.
५ 'हैमसिंहासनताम्' A. B.
६ 'सुरभिसुमनोदामभूयमनोदा(?)' A. B.

रूभवत्। यः पौ[1]षधागारस्थितो मिथ्यादृग्देवेन पिशाच-गजभुजग[2]रूपैरुपसर्गितोऽपि न क्षोभमभजत्। श्लाघितश्च भगवतान्तःसमवसरणम् ॥ १२ ॥

अस्यां विहरन् श्रीशय्यं[3]भवसूरिश्चतुर्दश पूर्वधरः स्वतनयं **मनका**[4]भिधानं **राजगृहा**दागतं प्रव्राज्य तस्यायुः षण्मासाव-शेषं श्रुतज्ञानोपयोगेनाकलय्य तदध्ययनार्थं **दशवैकालिकं** पूर्वगतान्निर्व्यूढवान्। तत्रात्मप्रवादात् षड्जीवनिकां कर्मप्रवादात् पिण्डैषणं(णां?) सत्यप्रवादाद्वाक्यशुद्धिं अवशिष्टाध्ययनानि प्रत्या-ख्यानपूर्वतृतीयवस्तुन इति ॥ १३ ॥

अस्यां वास्तव्यः **कुमारनन्दी** सुवर्णकारः स्ववैभ[5]वाभिभूत-धनदमदोऽकाण्डकाण्डानुप्रवेशात् पञ्च शैलाधिपत्यमधिगत्य प्राग्भवसुहृद-च्युतविबुधबोधितः[6] चारुगोशीर्षचन्दनमयीं जीवन्त(वत्)[7]स्वामिनीं सालंकारां देवाधिदेव**श्रीमहावीर**प्रतिमां निर्ममे ॥ १४ ॥

अस्यां **पूर्णभद्रे** चैत्ये **श्रीवीरो** व्याकरोद्योऽ**ष्टापद**मारोहति स तद्भव एव सिध्यतीति ॥ १५ ॥

---

१ 'पो(पौ?)षधागार' A.

२ 'भुजगरूपैरुपसर्गितोऽपि न क्षोभ' इति लेखकदोषेण द्विवारं A. पुस्तके। ३ 'श्रीशय्यभव' B.

४ 'यमनि(न?)काभिधानं' A.

५ 'स्वविभववैभवाभिभूत' A. B.

६ 'बोधितचारुगोशीर्ष' A.

७ 'जीवन्त[वत्?]स्वामिनी' A.

अस्यां पालितनामा श्रीवीरोपासको वणिक् तस्य पुत्रः समुद्रयात्रायां समुद्रे प्रसूत इति समुद्रपालो वध्यं नीयमानं वीक्ष्य प्रति[१]बुद्धः सिद्धिं च प्रापत् ॥ १६ ॥

अस्यां सुनन्दः श्राद्धः साधूनां मलदुर्गन्धं[२] निन्दित्वा मृतः कौशाम्ब्यामिभ्यसुतोऽभूद्व्रतं चाग्रहीद्दुर्दीर्घदुर्गन्धः कायोत्सर्गेण देवतामाकृष्य स्वाङ्गे सौगन्ध्यमकार्षीत् ॥ १७ ॥

अस्यां कौशिकार्यशिष्याङ्गर्षिः रुद्रकाभ्या[३]ख्यान-संविधानकं सुजातप्रियङ्ग्वादि-संविधानकानि च जज्ञिरे ॥ १८ ॥

इत्यादिनानाविधसंविधानकरत्नप्रकटनानाहतनिधानमियं पुरी। अस्याश्च प्राकारभित्तिं[४] प्रियसखीव प्रतिक्षणमालिङ्गतिपावन-घनरसपूरितान्तरा सरिद्वरा प्रस्फुलरवीचिभुजाभिः ॥ १९ ॥

उत्तमतमनरनारीमुक्तामणिधोरणिप्रसवशुक्तिः ।
नगरी विविधाद्भुतवस्तुशालिनी मालिनी जयति ॥२० ॥
जन्मभूर्वासुपूज्यस्य तद्भक्त्या स्तूयते बुधैः ।
चम्पायाः[५] कल्पमित्याधुः (द्धः ?) श्रीजिनप्रभसूरयः[६] ॥ २१ ॥

इति श्रीचम्पाकल्पः समाप्तः ॥

ग्रं ४७[७] ॥

---

१ 'प्रतिब(बु ?)द्धः' B. २ 'दुर्गंध्यं(न्धं ?)' A.
३ 'रुद्रकान्याख्यान' B. ४ 'भित्ति(त्तिं ?)' A.
५ 'चम्पाया[ः]' A. ६ 'श्रीजिनप्रभसुरिभिः (रयः ?)' B.
७ 'ग्रं ५७' A.

आनम्य श्रीनेमिनमनेकपुंरत्नजनिपवित्रस्य ।
श्रीपाटलिपुत्राह्वयनगरस्य प्रस्तुमः कल्पम्[१] ॥ १ ॥

पूर्वं किल श्रीश्रेणिकमहाराजे[२]ऽस्तं गते तदात्मजः कूणिकः पितृशोकाच्चम्पापुरीं न्यवीविशत् । तस्मिंश्चालेख्य[३]शेषतां प्रयाते तत्सुनुरुदायिनामधेयश्चम्पायां क्षोणिजानिरजनिष्ट । सोऽपि स्वपितुस्तानि तानि सभाक्रीडाशयनासनादिस्थानानि पश्यन्नस्तोकं शोकमुदवहत् । ततोऽमा[४]त्यानुमत्या नूतनं नगरं निवेशयितुं नैमित्तिकवरान्[५] स्थानगवेषणायादिक्षत् । तेऽपि सर्वत्र तांस्तान् प्रदेशान् पश्यन्तो गङ्गातटं ययुः । तत्र कुसुमपाटलं पाटलितरुं प्रेक्ष्य तच्छोभाचमत्कृतास्तच्छाखायां निषण्णं चाषं व्यात्तवदनं स्वयं-निपतत्कीटकपेटकमालोक्य चेतस्यचिन्तयन्नहो यथास्य चाषपक्षिणो मुखे स्वयमेत्य कीटाः पतन्तः सन्ति तथात्र स्थाने नगरे निवेशितेऽस्य राज्ञः स्वयं श्रियः समेष्यन्ति । तच्च ते राज्ञे व्यजिज्ञपन् । सोऽप्यतीव प्रमुदितः । तत्रैको जरन्नैमित्तिको व्याहरद्देव ! पाटलातरुरयं न सामान्यः । पुरा हि ज्ञानिना कथितं—

पाटलाद्रुः पवित्रोऽयं महामुनिकरोटिभूः[६] ।
एकावतारोऽस्य मूलजीवश्चेति विशेषतः ॥

---

१ 'कल्पम्' इति A. पुस्तके नास्ति ।
२ 'महाराज्ञे(जे ?)' A.
३ 'शेष...प्रयाते' B.
४ 'म(मा ?)त्यानुमा(म ?)त्या' A. B.
५ 'नैमित्तिकवरात्(न् ?) A.
६ 'क[रो ?]टिभूः' B.

राज्ञोक्तं कतमः स महामुनिः[१]। तदनुजगाद नैमित्तिकः। श्रूयतां देव! उत्तरमथुरायां वास्तव्यो देवदत्ताख्यो वणिक्पुत्रो दिग्याचार्थं दक्षिणमथुरामगमत्। तत्र तस्य जय[२]सिंहनाम्ना वणिक्पुत्रेण सह सौहृदमभवत्। अन्यदा तद्गृहे भुञ्जानोऽन्निका-नाम्नीं तज्जामिं स्थाने भोजनं परिवेष्य वातव्यजनं कुर्वतीं[३] रम्यरूपा-मालोक्य तस्यामनुरक्तो द्वितीयेऽह्नि वरकान् प्रेष्य जयसिंहं तामयाचिष्ट। सोऽप्यधादहं तस्मा एव ददे स्वसारं यो मद्गृहा-द्दूरे न भवति। प्रत्यहं तां तं च यदा पश्यामि। यावद-पत्यजन्म तावद्यदि मद्गृहे स्थाता तस्य जामिं दास्यामीति। देवदत्तोऽप्योमित्युक्त्वा शुभेऽह्नि तां पर्यणैषीत्। तया सह भोगान् भुञ्जानस्या[४]न्यदा पितृभ्यां लेखः प्रैषि। तं वाचयतस्तस्य नेत्रे वर्षितुमश्रू(श्रू?)[५]णि प्रवृत्ते। ततस्तया हेतुं पृष्टोऽपि याव-न्नाब्रवीत्तावत्तयादाय लेखः स्वयं वाचितस्तत्र चेदं लिखित-मासीत् गुरुभ्याम्। यद्वत्सावां वृद्धौ निकटनिधनौ यदि च नौ जीवन्तौ दिदृ[६]क्षसे(सि) तदा द्रागागन्तव्यमिति। तदनु सा पतिमाश्व(श्वा?)स्य भ्रातरं हठादप्यन्वजिज्ञपत्। भर्त्रा सह प्रतस्थे चोत्तरमथुरां प्रति सग[७]र्भा। क्रमान्मार्गे सूनुमसूत। नामास्य पितरौ करिष्यत इति देवदत्तोक्ते परिजनस्तमर्भकमन्निका-

---

१ 'करोटिभूः'—इत्यारभ्य 'स महामुनि,' इत्यन्तः पाठः A. पुस्तके नास्ति। २ '[जय ?]सिंहनाम्ना' B.

३ 'कुर्वन्तीं' A. B. ४ 'भुञ्जतस्तस्य' A. 'भुञ्जन्तस्तस्य' B.

५ 'चश्रू' A. B. ६ 'दिदृक्षसे(सि ?)' A. 'दि...क्षसि' B.

७ 'सगर्भाः(र्भा ?)' B.

पुत्र इत्युल्लापितवान् । क्रमेण **देवदत्तो**ऽपि स्वपुरीं प्राप्य पितरौ प्रणम्य च शिशुं तयोरार्पयत् । **संधीरणे**त्याख्यां तौ नमुखर्काते तथाप्यन्निकापुत्र इत्येव पप्रथेऽसौ । वर्ध-मानस्य प्रा[१]प्नतारुण्योऽपि भोगांस्तृणवद्विधूय **जयसिंहाचार्य**पार्श्वे दीक्षाम[२]ग्ट(ग्र)ह्णीत् । गीतार्थीभूतः प्रापदाचार्यकम् । अन्यदा विहरन् सगच्छो वार्द्धके **पुष्पभद्रपुरं गङ्गातटस्थं** प्राप्तः । तत्र **पुष्पकेतु**र्नृपस्तद्देवी **पुष्पवती** तयोर्युग्मजौ **पुष्पचूलः पुष्पचूला** चेति पुत्रः पुत्री चाभूताम् । तौ च सह वर्द्धमानौ क्रीडन्तौ च परस्परं प्रीतिमन्तौ जातौ । राजा दध्यौ यद्येतौ वियु[३]ज्येते तदा नूनं न जीवतोऽहमप्यनयोर्विरहं सोढुमनीश[४] तदनयोरेव विवाहं करोमीति ध्यात्वा मन्त्रिमित्रपौरांश्छलेना-ऽपृ[५]च्छत् । भो ! यद्रत्नमन्तःपुर उत्पद्यते तस्य कः प्रभुः ? तैर्विज्ञप्तं दे(व ? अ)न्तःपुरोत्पन्नस्य किं वाच्यं यद्देशमध्येऽप्युत्पद्यते रत्नं रा[६]जा तद्यथेच्छं विनियुङ्क्ते । कोऽत्र बाधः ? तच्छ्रुत्वा स्वाभिप्रायं निवेद्य देव्यां वारयन्त्यामपि तयोरेव संबन्धमघटयन्नृपः । तौ दम्पती भोगान् [७]भुङ्क्तः(भुञ्जाते) स्म । राज्ञी तु पत्यपमान-वैराग्याद्व्रतमादाय स्वर्गे देवोऽभूत् । अन्यदा **पुष्पकेतौ** कथाशेषे **पुष्पचूलो** राजाभूत् । स च देवः प्र[८]युक्तावधिस्तयोरकृत्यं ज्ञात्वा स्वप्ने **पुष्पचूलाया** नरकानदर्शयत् तद्दुःखानि च । सा

---

१ 'प्राप्तं(प्त ?)' A. २ 'अग्ट(ग्र ?)ह्णीत्' A. B.
३ 'वियुज्य(ज्ये ?)ते' B. ४ 'अनीशः[:]' A.
५ 'अपृय(च्छ ?)द्' A. ६ 'तद्राजा यथेच्छं विनियुङ्क्ते' A. B.
७ 'भुङ्क्तः स्म' A. B. ८ 'देव प्रयुक्तावधिः' A. B.

च प्रबुद्धा भीता च पत्युः सर्वमावेदयत्। सोऽपि शान्तिक-मचीकरत्। स च देवः प्रतिनिशं नरकांस्तस्या अदर्शयत्। राजा तु सर्वांस्तीर्थिकानाहूय पप्रच्छ। कीदृशा नरकाः स्युरिति कैश्चिद्गर्भवासः, कैश्चन गुप्तिवासः, कैरपि दारिद्र्यमपरैः पारत(न्त्र्य ?)-मिति तैर्नरका आचचक्षिरे। राज्ञी तु मुखं मोटयित्वा तान् विसंवादिवचसो व्यसाक्षीत्।

अथ नृपोऽन्निकापुत्राचार्यमाकार्य तदेवाप्राक्षीत्। तेन तु यादृशान् देव्य[1]दृशत्तादृशा एवोक्ता नरकाः। राज्ञी प्रोचे भगवन्! भवद्भिरपि किं स्वप्नो दृष्टः कथमन्यथे[2]त्थं वित्थ। सूरिरवदद् भद्रे! जिनागमात्सर्वमवगम्यते। पुष्पचूलाऽवोचद् भगवन्! केन कर्मणा ते प्राप्यन्ते गुरुरगदणात्—भद्रे! महारम्भ-परि[3]ग्रहैर्गुरुप्रत्यनीक[4]तया पञ्चेन्द्रियवधान्मांसाहाराच्च तेष्वङ्गिनः पतन्ति। क्रमेण स सुरस्तस्यै स्वर्गा[5]नदर्शयत् स्वप्ने। राज्ञा[6] तथैव पाखण्डिनः पृष्टास्तानपि व्यभिचारिवाचो विसृज्य भूपस्त-मेवाचार्यं स्वर्गस्वरूपमप्राक्षीत्। तेनापि यथावत्तत्रोदिते स्वर्गाप्ति-कारणमपृच्छद्राज्ञी। ततः सम्यक्त्वमूलौ गृहियतिधर्मावादिश-न्मुनीशः। प्रतिबुद्धा च सा लघुकर्मा नृपमनुज्ञापयति स्म प्रव्रज्यायै। सोऽप्यूचे यदि मद्गृह एव भिक्षामादत्से तदा प्रव्र[7]ज। तयोरीकृते नृपवचसि सा सोत्सवमभूत्तस्याचार्यस्य शिष्या गीतार्था

---

१ 'देव्यदर्शत्' A. 'देव्यादर्शत्' B. २ 'अन्ये(न्यथे ?)त्थं' B.
३ 'परग्ग(ग्र ?)हैः' B. ४ 'प्रत्यनीकतयाः(या ?)' B.
५ 'स्वर्गाद(दी ?)नदर्शयत्' B. ६ 'तथैव राज्ञा' B.
७ 'प्रव्रजः(ज ?)' B.

च। अन्यदा भाविदुर्भिक्षं श्रुतोपयोगात् ज्ञात्वा सूरिर्गच्छं देशान्तरे प्रैषीत्। स्वयं तु परिक्षीणजङ्घाबलस्तत्रैवास्थात्। भक्तपानं च पुष्पचूलान्तःपुरादानीय गुरवेऽदात्। क्रमात्तस्या गुरुशुश्रूषाभावनाप्रकर्षात् चप[ण ?]कश्रेण्यारोहात् केवलज्ञानमुत्पेदे। तथापि गुरुवैयावृत्त्यान्न निवृत्ता यावद्धि [1]गुरुणा न ज्ञातं यदयं केवलीति तावत् पूर्वप्रयुक्तं विनयं केवल्यपि नात्येति। सापि यद् यद्गुरोरुचितं रुचितं च तत्तदन्नादि संपादितवती। अन्यदा वर्षत्यब्दे सा पिण्डमाहरत् गुरुभिरभिहितं वत्से! श्रुतज्ञासि किमिति वृष्टौ त्वयानीतः पिण्ड इति। साऽभाणीद्भगवन्! यत्राध्वनि अप्कायोऽचित्त एवासीत्तेनैवायासिषमहं कुतः प्रायश्चित्तापत्तिः(?)। गुरुराह—छद्मस्थः[2] कथमेतद्वेद? तयोचे केवलं ममास्ति। ततो मिथ्या मे दुष्कृतं केवल्या शातित इति ब्रुवन्नपृच्छत्तां गच्छाधिपः—किमहं सेत्स्यामि न वेति। केवल्यूचे मा कृद्धमधृतिम्; गङ्गामुत्तरतां वो भविष्यति केवलम्। ततो गङ्गामुत्तरीतुं लोकैः सह नावमारोहत्सूरिः। यत्र यत्र स न्यषीदत् तत्र तत्र नौर्मङ्क्तुमारेभे। तदनु मध्यदेशासीने मुनीने सर्वापि नौर्मङ्क्तुं लग्ना। ततो लोकैः सूरिर्जले चिप्तः। दुर्भगीकरणविराद्धया प्राग्भवपत्न्या व्यन्तरीभूतयान्तर्जलं शूले निहितः। शूलप्रोतोऽप्ययमप्कायजीवविराधनामेवाशोचयन्नात्मपीडां चप[ण]कश्रेण्यारूढोऽन्तकृत् केवलीभूय सिद्धः। आसन्नैः सुरैस्तस्य निर्वाणमहिमा चक्रे। अत एव तत्तीर्थं 'प्र[3]याग' इति जगति पप्रथे[4]।

---

[1] 'गु[रु ?]णा' A. [2] 'छद्मस्थ' B.

[3] 'प्रयो(या ?)ग' A. [4] 'पं(प ?)प्रथे' B.

प्रकृष्टो यागः पूजा अर्चेति[१] प्रयागः। शूलाप्रोतलगतानुगतिकतया चाद्यापि परसमयिनः क्रकचं स्वाङ्गे दापयन्ति [२]तत्रावटस्य तत्र गणशस्तुरुष्कैश्छिन्नोऽपि मुहुर्मुहुः प्ररोहति।

सूतेः करोटिर्यादोभिस्त्रोट्यमानापि जलोर्मिभिर्नदीतीरं नीता। इतस्ततो लुलन्ती च शुक्तिवन्नदीतटे क्वापि गुप्तविषमे प्रदेशे विलग्य तस्थौ। तस्य च करोटिकर्परस्यान्तः कदाचित्पाटलाबीजं न्यपप्तत्। क्रमात् करोटिकर्परं भित्त्वा दक्षिणहनोः पाटला-तरुरुद्गतो विशालश्चायमजनि। तदत्र पाटलिद्रोः प्रभावाच्चाष-निमित्ताच्च नगरं निवेश्यताम्, आशिवाशब्दं च सूत्रं दीयताम्। ततो राज्ञादिष्टा नैमित्तिकाः पाटलां पूर्वतः कृत्वा पश्चिमां तत उत्तराम्, ततः पुनः पूर्वां ततो दक्षिणां शिवाशब्दावधिं गत्वा [३][सूत्र]मपातयन्नेवं चतस्रः (चतुरस्रः?) पुरस्य [४]सन्निवेशो बभूव। तत्राङ्किते प्रदेशे पुरमचीकरन्नृपः। तच्च **पाडली(टला?)**नाम्ना **पाटलिपुत्रं** पत्तनमासीत्। असमकुसु[५]मबहुलतया च **कुसुम-पुर**मित्यपि रूढम्। तन्मध्ये श्रीनेमिचैत्यं राज्ञाकारि। तत्र पुरे गजाश्वरथशालाप्रासादसौधप्रका[६]रा(प्राकार?)गोपु[७]रपण्यशाला-सत्रागारपौष[८]धागाररम्ये चिरं राज्यं जैनधर्मं चापालयदुदायि-नरेन्द्रः।

---

१ 'अर्चेतिः(ति)' B. २ 'तत्र वटस्य' इति A. पुस्तके नास्ति।

३ '[सूत्र]मपातयन्' A. B. ४ 'सन्निवेशे(शो?)' A.

५ 'कुसुमबहुलतया च' इति A. पुस्तके नास्ति।

६ 'प्राकार' B. ७ 'गोपुर[प?]ण्यशाला' B.

८ 'पो(पौ)षधागार' A. B.

तस्मिन्नुपात्तपोषधेन्यदोदायिमारकेण स्वर्गातिथ्यं प्रापिते नापितग[1]णिकासुतो नन्दः श्रीवीरमोक्षात् षष्टिसंवत्सर्यामतीतायां क्षितिपतिरजनि। तदन्वये सप्त नन्दा नृपा जाताः। नवमनन्दे राजनि परमार्हतकल्पकान्वयी शकटालो मन्त्र्यभूत्। तस्य पुत्रौ स्थूलभद्र-श्री(श्रि?)यकौ, सप्त च पुत्र्यो यक्षा-यक्षदत्ता-भूता-भूतदत्ता-एणा-रेणा-वेणाख्याः क्रमादेकादिसप्तान्त-वारश्रुतपाठिन्योऽज[2]निषत।

तत्रैव पुरे कोशा वेश्या तज्जामिरूपकोशा चाभूताम्।

तत्रैव च चाणि(ण?)क्यः सचिवो नन्दं समूलमुन्मूल्य मौर्यवंश्यं श्रीचन्द्रगुप्तं न्यवीविशद्विशांपतित्वे। तद्वंशे तु बिन्दुसारोऽशोक[3]श्रीः कुणालसूनुस्त्रिखण्डभरताधिपः परमार्हतोऽनार्यदेशेष्वपि प्रवर्तितश्रमणविहारः संप्रतिमहाराजश्चाभवत्।

मूलदेवः सकलकलाकलापज्ञोऽचलसार्थवाहो महाधनी देवदत्ता च गणि[4]कमाणिक्यं तत्रैव प्रागवसन्। उमास्वातिवाचकश्च कौभीषणिगोत्रः पञ्चशत-संस्कृतप्रकरण-करण-प्रसिद्धस्तत्रैव तत्त्वार्थाधिगमं सभाष्यं[5] व्यरचयत्। चतुरशीतिर्वादशालाश्च तत्रैव विदुषां परितोषाय पर्यणंसिषुः।

तत्रैव चोत्तुङ्गतरङ्गोत्सङ्गितगगनाङ्गणापरिवहति महानदी गङ्गा।

---

१ 'नापित[ग?]णिकासुतो' A. २ 'अजनिषत्(त?)' A.
३ 'अशोकः(क?)' श्रीः। ४ 'गाणिक्यं(क्य?)माणिक्यं' A.
५ 'सं(स?)भाष्यं' B.

तस्यैव चोत्तरा(र?)दिशि विपुलं वालुकास्थलं नातिदूरे यत्रारुह्य कल्की प्रातिपदाचार्यप्रमुखसङ्घश्च सलिलप्लवान्निस्तरीता ।

तत्रैव च भविष्यति कल्किनृपति[1]धर्मदत्त-जितशत्रुमेघ-घोषादयश्च तद्वंश्याः ।

तत्रैव च विद्यन्तेऽन्तर्निहितनन्दसत्क-नवनवतिद्रव्यको(टयः) पञ्च स्तूपाः येषु धनधनायया श्रीलक्ष्मणावतीसुरत्राणस्तांस्तानुपा-क्रमतोपक्रमांस्ते च तत्सैन्योपप्लवायैवाकल्पन्त ।

तत्रैव[2] विहृतवन्तः श्रीभद्रबाहुमहागिरिसुहस्तिवज्र-स्वाम्यादयो युगप्रवरागमाः । विहरिष्यन्ति च प्रातिपदा-चार्यादयः ।

तत्रैव महाधनधनश्रेष्ठिनन्दना रुक्मिणी श्रीवज्रस्वामिनं पतीयन्ती प्रतिबोध्य तेन भगवता निर्लोभचूडामणिना प्रव्राजिता ।

तत्रैव सुदर्शनश्रेष्ठी म[3]हर्षि(हर्षि?)रभयाराज्ञा व्यन्तरी-भूतया भूयस्तरमुपसर्गितोऽपि न क्षोभमभजत(त्?) । तत्रैव स्थूलभद्र-महामुनिः[4] षड्रसाहारपरः कोशायाश्चित्रशालायामुत्पादित-मदनमदश्चकार वर्षारात्रचतुर्मासीम् । सिंहगुहावासिमुनिरपि तं स्पर्द्धिष्णुस्तत्रैव कोशया तदानीतरत्नकम्बलस्य चन्दलि(नि?)का-प्रक्षेपेण[5] प्रतिबोध्य पुनश्चारुतरां चरणश्रियमङ्गीकारितः ।

---

१ 'कल्किन्टपति धर्मदत्त' B. २ 'तत्रैव च' A.
३ 'मह्रष(र्ष ?)षिः' A. ४ 'महामुनि[ः]' B.
५ 'प्रक्षेप(पे ?)णे (ण ?)' A.

तत्रैव द्वादशाब्दे दुर्भिक्षे[1] गच्छे देशान्तरं प्रति प्रोषिते[2] सति **सुस्थिताचार्य**शिष्यौ क्षुल्लकावदृश्यी[3]करणाञ्जनाक्तचक्षुषौ **चन्द्रगुप्त**नृपतिना सह बुभुजाते कियन्त्यपि दिनानि। तदनु गुरुप्रत्युपालम्भाद्‌**विष्णुगुप्त** एव तयोर्निर्वाहमकरोत्। तत्रैव **श्रीवज्रस्वामी** पौरस्त्रीजनमनःसंक्षोभरक्षणार्थं प्रथमदिने सामान्यमेव रूपं विकृत्य द्वितीयेऽह्नि चाहो! नास्य भगवतो गुणानुरूपं रूपमिति देशान्त(शना?)रसहृतहृदयजनमुखात् संलापान् श्रुत्वाऽनेकलब्धिमान् सहजमप्रतिरूपं रूपं विकुर्व्य सौवर्णसहस्रपत्रे निषद्य देशनां विधाय राजादिजनताममोदयत्।

तस्यैव पुरस्य मध्ये सप्रभावातिशया मातृदेवता आसंस्तदनुभावा[4]त्तत्पुरं परैराग्रहवद्भिरपि न खलु ग्रहीतुमशाकि। **चाणि(ण?)क्य**वचसोत्पाटिते पुनर्जनैर्मातृमण्डले गृहीतवन्तौ **चन्द्रगुप्तपर्वतकौ**। एवमाद्यनेकसंविधानकनिधाने तत्र नगरेऽष्टादशसु(सु?) विद्यासु स्मृतिषु पुराणेषु च[5] द्वासप्ततौ कलासु **भरत-वात्स्या-यन-चा[6]णक्य**लक्षणे रत्नत्रये मन्त्रयन्त्रतन्त्रविद्यासु रसवादधातुनिधिवादाञ्जनगुटिकापादप्रलेपरत्नपरीक्षा-वास्तुविद्या-पुंस्त्रीगजाश्ववृषभादिलक्षणेन्द्रजालादिग्रन्थेषु काव्येषु च निपुणचणास्ते ते पुरुषाः प्रत्यूषुः प्रत्यूषकीर्तनीयनामधेयाः।

**आर्यरक्षितो**ऽपि हि चतुर्दशविद्यास्थानानि तत्रैवाधीत्य **दशपुर**मागमत्। आढ्यास्तु तत्रैवंविधा वसन्ति स्म, ये

---

१ 'दुर्भिभि(भि?)क्षे' B. २ 'प्रोषिते' A. B.
३ 'अदृश्यीकरणाञ्जन' B. ४ 'तदनुभावा।...त् पुरं' B.
५ 'च' इति B. पुस्तके नास्ति। ६ 'चाणा(णा?)क्य' A.

योजनसहस्रगमने यानि गजपदानि भवेयुस्तानि प्रत्येकं स्वर्णसहस्रेण पूरयितुमीशते । अन्ये च तिलानामा[१]ढक उप्ते प्ररूढे सुफलिते यावन्तस्तिलाः स्युस्तावन्ति हेमसहस्राणि बिभ्र[२]ति स्म गृहे । अपरे च घनागमप्रव[३]हद्गिरिनदीवारिपूरस्यैकदिनोत्पन्नेन गवां नवनीतेन संवरं विरचय्य पयोरयं स्खलयितुमलम् । अन्यतमे चैकाहजातजात्यनवकिशो[४]राणां समुद्धृतैः स्कन्धकेशैः[५] पाटली(लि?)पुत्रं समन्ताद्वेष्टयितुमचेष्टन्त । इतरे च शालिरत्नद्वयं वेश्मनि बिभरांबभुवस्तत्रैकशालिर्भिन्नभिन्नशालिबीजप्रसूतिमानन्यश्च गर्द्दभिकाशालि[६]र्यो लूनलूनः पुनः पुनः फलति ।

गौडदेशावतंसस्य श्रीजिनप्रभसूरयः ।
कल्पं पाटलिपुत्रस्य रचयांचक्रुरागमात् ॥

इति श्रीपाटलिपुत्रपुरकल्पः ॥

ग्रं. १२५ अ. १९[७] ॥

---

१ 'तिला[ना?]माढक' A.

२ 'बिभ्र(भ्र?)ति' A; 'बिभ्र...' B.

३ 'प्रह्वर(वह?)द्' A.

४ 'फ(कि?)शोराणां' A.

५ 'कै(के?)शैः' B.

६ 'शालियो(र्यो?)' B.

७ 'अ. १९' इति A. पुस्तके नास्ति ।

दुहसरितारणवत्थी सावत्थी सयलसुक्खपसवत्थी.।
नमिऊण संभवजिणं तीसे क[1]प्पे(प्पे)मि कप्पलवम् ॥ १ ॥

अत्थि इहेव दाहिणड्ढभारहखंडे अगणिज्जगुणगणविसए कुणालाविसए सावत्थी नाम नयरी संपइकाले 'महे[2]ठि'-त्ति रूढा। जत्थ अज्ज वि घणगहणवणमज्झट्ठियं[3] सिरि-संभवनाहपडिमाविभूसियं गयणग्गलग्गसिहरं पासट्ठियजिणबिंब-मंडियदेवउलियाअलंकरियं जिणभवणं चिट्ठइ. पायारपरियरियं। तस्स चेइयस्स दुवारअदूरसामंते विल्लिरउल्ल[4]सिरअतुल-पल्लव-सिणिद्धच्छाओ महल्लसाहाभिरामो रत्ता[5]सोअपायवो दीसइ। तस्स य जिणभवणस्स पओलीए जे कवाडसंपुडा आसि ते माणि-भद्दजक्खाणुभावाओ सूरिए अत्थमुविंते सयमेव लग्गंति म्ह उदिए य दिणयरे सयमेव उग्घडन्ति म्ह। अन्नया कलि-कालदुल्ललिअवसेण अल्लावदीणसुरत्ताणस्स म[6]लिक्केण हब्ब-सनामगेणं बहडाइच्चनगराओ आगंतूण पायारभित्तिकवाडाइ कइवयबिंबाणि अ भग्गाणि। मंदप्पभावा हि भवंति दूसमाए अहिट्ठायगा। तहा तस्सेव चेइयस्स सिहरे जत्तागयसंघेणं कीरमाणे ण्हवणाइमहूसवे आ[7]गंतूण एगो चित्तगो उवविसइ। न[8] य कस्स वि भयं जणेइ। जाव मंगलपईवे कए सट्ठाणमुव-गच्छइत्ति।

१ 'कप्पेमि' A. B. २ 'महिठित्ति' B.
३ 'मज्झट्ठियं' A. ४ 'उल्लरसिरं' A. B.
५ 'रे(र ?)त्तासो' A. ६ 'मलिक्केण' B.
७ 'अ(आ ?)गंतूण' A. ८ 'नायकस्स' A.

इत्थेव नयरीए बुद्धाययणं चिट्ठइ जत्थ **समुद्दवंसीया करावल्ल**[1]नरिंदकुलसंभूया रायाणो बुद्धभत्ता अज्जवि नियदेवयस्स पुरओ महग्घसुलंपल्लाणियं[2] अलंकियं विभूसियं महातुरंगमं ढोअंति। जंगुलीविज्जा य इत्थेव बुद्धेण ससंपदाया पयासिआ महप्पभावा। इत्थेव निप्पज्जंति नाणाविहा साली जेसिं सव्वसा[3]लिजाईणं इक्किक्के कणंमि निखिप्पमाणे आसिहं भरिज्जइ महंतं खोरयं। इत्थेव भयवं **संभवसामी** चवणजम्मणनिक्खमण[4]-केवलनाणुप्पत्तिकल्लाणगाइंससुरासुरनरभवणमणरंजना[5]इं अकारि।

**कोसंबीपूरीए** उप्पन्नो **जियसत्तु**निवसचिवकास[व?]पुत्तो **जसाकु**[6]क्खिसंभूओ **कविलो** महरिसी जणयम्मि विवन्ने विज्जाअहिज्जण[7]त्थं एयं नय[8]रिं(रं) समागओ **पिउमित्तइंददत्त**उवज्झायसयासे। **सालिभद्द**इब्भदासचेडीवयणेणं दोमासयसुवण्णकए बज्झंतो कमेण सयंबुद्धो जाओ, पडिबोहिऊण पंचसयचोरे सिद्धो अ।

इत्थेव **तिंदुगुज्जाणे** पंचसयसमणअज्जिआसहस्सपरिवुढो[9] पढमनिन्हवो **जमाली** ठिओ। **ढंकेण** कुंभयारेण पढमं नियसाला संठिआ भगवओ धूआ **पिअदंसणा** अज्जा

---

१ 'कराचल्ल' T. B.   २ 'पल्लाणी(णि?)यं' A.

३ 'सुवं(सव्व?)सालि' A.

४ 'निक्खमण' इति A. पुस्तके नास्ति।

५ 'रंजणाइ' A.   ६ 'जसाजक्खि' B.

७ 'अहिज्जणत्थं' A.   ८ 'नयरिं' A. 'नयरं' B.

९ 'परिवुडो' A. B.

साविधाएगदेसे अंगारं कोट्टू(ट्ठू?)[1]ण 'कयमाणे क[2]डि' त्ति वीरव[3]यणं पडिवज्जाविया। तीए य सेससाहुणी साहुणो पडिबोहिया 'सामिं चेव अल्लीणा। एगो चेव जमाली विप्पडिवन्नो ठिओ।

इत्थेव तिन्दुगुज्जाणे केसीकुमारसमणो गणहरो भयवया गोअमसामिणा कुट्ठयउज्जाणाओ आगंतूण परुप्परं संवायं च काउं पंचजामं धम्ममंगीकारिओ।

इत्थेव एगं वासारत्तं समणो भयवं महावीरो ठिओ खंड(द)पडि[4]माए सक्केण य पूइओ चित्तं च तवोकम्ममकासी।

इत्थेव जियसत्तुधारी(रि?)णीपुत्तो खंदगायरिओ उप्पन्नो। जो पंचसयसीससहिओ पालगेणं कुंभयारकडनयरे जंतेण पीलि[5]ओ। इत्थेव जियसत्तुरायपुत्तो भद्दो नाम पव्वइत्ता पडिमं पडिवन्नो विहरंतो वेरज्जे संपत्तो चा(चो?)रिओ त्ति काऊण गहिओ रायपुरिसेहिं तच्छियंगो खारं दाउं कक्कडदब्भेहिं वेढिओ मुक्को सिद्धो अ। जहा रायगिहाइस तहा इत्थ वि नयरीए बंभदत्तस्स हिं[6]डी जाया। इत्थेव खुड्डगकुमारो अजियसेणायरियसीसो जणणीमयहरियाआयरियउवज्झाय-निमित्तं बारसबारसवरिसाणि दव्वओ सामण्णे ठिओ। नट्टविहीए सुट्ठुगाइयं सुट्ठुवाइयमिच्चा[7]इगीइ[8]यं सोउं जुवरायसत्थवाहभज्जा-

1 'कोठूया' A. B. 2 'कड त्ति' B,
3 'वीरवयणं पडिवन' । 4 'खंडपडिमाए' A. B.
5 'पालिओ' B. 6 'बंभदत्तहिंडी' A.
7 'मिचाइं' B. 8 'गीइय' B.

मज्झिमिं ठेहिं समं पडिबुद्धो। एवमाईणं अणेगेसिं संविहा[1]ण-
गरयणाणं उप्पत्तीए एसा नयरी रोहणगिरिभूमित्ति।

सावत्थिमहातित्थस्स कप्पमेयं पढंतु विउसवरा।
जिणपवयणभत्तीए इय भणइ जिणप्पहो सूरी ॥ १ ॥

इति श्रीश्रावस्तीकल्पः ॥ ग्रं. ४२ ॥

---

१ 'संविग्गां[णा]गरयणाणं' B.

नत्वा तत्त्वाख्यायिनं श्री[1]सुपार्श्वं
श्रीपार्श्वं च न्यञ्चितानिघ्नविघ्नम्।
वा[2]णार(राण)स्यास्तीर्थरत्नस्य कल्पं
जल्पामोऽसत्कल्पनापोढकल्पम्॥ १॥

अस्त्यत्रैव दक्षिणे भारतार्धे मध्यमखण्डे काशिजनपदालंकृति-रुत्तरवाहिन्या त्रिदशवाहिन्यालंकृतधनकनकरत्नसमृद्धा वाणा-(राण)रसी नाम नगरी गरीयसामद्भुतानां वि(नि?)धानम्। वरणा नाम्नी सरिदसिनाम्नी च। द्वे अपि सरितावस्यां गङ्गामनुप्रविष्टे इति वाराणसीति नैरुक्तं नामास्याः प्रसिद्धम्।

अस्यां सप्तमो जिनसत्तमः श्रीमान् सुपार्श्वऐक्ष्वाकु-प्रतीष्ट[3]महीपतिमहिष्याः पृथ्वीदेव्याः कुक्षाववतीर्य जन्म(?)-मुपादित। त्रिभुवनजनवादितयशःपटहः स्वस्तिकलाञ्छितद्विशतधनु-रुच्छ्रायकाञ्चनच्छायकायः क्रमेण प्राज्यराज्यश्रियमनुभूय भूयः सांवत्सरिकं दानं प्रदाय सहस्राम्रवणे दीक्षां च कक्षीकृत्य विहृत्य छद्मस्थावस्थया नवमासीं केवलममलमासाद्य संमेतगिरि-मेत्य निर्वृतः।

त्रयोविंशश्च जिनेशः श्रीपार्श्वनाथ ऐक्ष्वाकाश्वसेननरसेन सूनुर्वामाकुक्षिसंभवः पन्न[4]गलक्ष्मा नवकरोच्छ्राय-नीलच्छविवपु-रात्तजन्माश्रमपदोद्याने कौमार एवोपात्तचारित्रभारः केवलमुत्पाद्य तस्मिन्नेव शैले शैले[5]शीमवाप्य सिद्धः। अस्यामेव कुमारकाले

---

१ 'श्री[सु]पार्श्वं' A. २ 'बाणारस्या' A. B.
३ 'प्रति(ती ?)ष्ट' A. ४ 'पन्नगलक्ष्मा(क्ष्मा ?)' B.
५ 'शैलेसी(शी ?)म्' A. B.

भगवानेष एव **मणिकर्णिकायां** पञ्चाग्नितपस्तप्यमानात्कमठर्षे-
रा[1]यतौ भाविनीं विपदमात्मनो विविदिवानप्यन्तर्दारुण-
ज्वलनज्वालाभिरर्द्धदग्धं दन्दशूकं जनन्या जनानां च संदर्श्य
कु[2]पथमथनमकार्षीत्। अस्यां **काश्यपगोत्रौ** चतुर्वेदौ षट्कर्म-
कर्मठौ समृद्धौ यमलभ्रातरौ **जयघोषविजयघोषाभिधानौ**
द्विजवरावभूताम्। एकदा **जयघोषः** स्नातुं गङ्गामगात्तत्र पृदा-
कु[3]णा ग्रस्यमानं भे[4]कमेकमालोकयत्। सर्पं च कुललेनोत्क्षिप्य
भूमौ पातितमद्राक्षीत्। सर्पमाक्रम्य स्थितं कु[5]ललं तमेव चण्ड-
ग्रासैः खादन्तं सर्पं च कुललवशगतमपि चीत्कुर्वाणमण्डूकभक्षिणं[6]
वीक्ष्य प्रतिबुद्धः। प्रव्रज्य क्रमादेकरात्रिकीं प्रतिमां प्रपद्य विहरन्
पुनरिमां[7] नगरीमागात्। मासक्षपणपारणके[8] यज्ञपाटकं
प्रविष्टः। तत्र विप्रैर्भैक्षमदित्सुभिः प्रतिषिद्धः। ततः श्रुताभिहित-
चर्यामुपदिश्य भ्रातरं विप्रांश्च प्रत्यवूबुधद्। विरक्तो **विजयघोषः**
प्राव्राजीद्(त्।)। द्वावपि मोक्षं प्रापतुः। अस्यां **नन्दाभिधानो**
नाविकस्तरपण्यजिघृक्षया मुमु[9]क्षुं **धर्मरुचिं** विराध्य तस्य
हुंकारेण भस्मीभूय गृहकोकिलहंससिंहभवान् यथासंख्यं सभामृत-
गङ्गातीराञ्जनागिरिष्ववाप्य तस्यैवानगारस्य तेजोनिसर्गेण विपद्य
चास्यामेव पुर्यां बटुर्भूत्वा तथैव निधनमधिगत्यास्यामेव राजा

---

१ 'आयता(तौ ?)' A. 'आय[तौ?]' B.
२ 'कुपथ[मथ ?]नम्' A. ३ '... दाकुणा' B.
४ '... कमेकं' B. ५ '... कुला(ल ?)लम्' A. B.
६ 'भक्ष(क्षि ?)णं' A. ७ 'इमा(मां ?)' B.
८ 'पार[ण ?]के' B. ९ 'मुमुक्षं(क्षुं ?)' A. B.

समजनिष्ट। जातिस्मरः सार्द्धं श्लोकमकरोत्। अन्येद्युस्तत्रैवागतं तमनगारं समस्यापूरणादिशायाभयया च न पुरस्सरमुपगत्य च चमयित्वा परमार्हतोभूत्। सिद्धश्च धर्मरुचिः क्रमात्। सा चेयं सम[1]स्या—

गंगाए न(ना ?) विश्रो नंदो सभाए घरकोइलो।
हंसो मयंगतीराए सीहो अंजणपव्वए॥

बाणार(राण ?)सीए बडुओ राया तत्थेव आयओ।
प(ए?)एसिं घायगो जोउ[2](जाओ) सो इत्थेव समागओ॥ इति।

अस्यां संवाहनस्य नरपतेः सातिरेके कन्यासह[3]स्ते सत्यपि परनृपतिपृतनावेष्टितायां पुरि राज्यलक्ष्मीं गर्भस्थोऽप्यङ्गवीरस्त्रातवान्।

अस्यां[4] मातङ्गऋषिर्बलनामामृतगङ्गातीरे लब्धजन्मा तिन्दुकोद्याने स्थितवान्। गण्डी तिन्दुकं च यक्षं गुणग[5]णैर्हृतहृदयमकार्षीत्। कौशलिकनृपदुहिता च भद्रा मलक्लि[6]न्नाङ्गं तमृषिं विलोक्य निष्ठ्यूतवती। ततस्तेन यक्षेणाधिष्ठिताङ्गी तेनैव मुनेर्वपुषि संक्रम्य परिणीता त्यक्ता च मुनिना। ततो रुद्रदेवेन यज्ञपत्नी कृता। मासक्षपणपारणे च भिक्षार्थमुपागतो मातङ्गमुनिर्द्विजातिभिरुपहस्य कदर्थ्यमानं तं प्रेक्ष्य भद्रयोपल[7]क्ष्य

---

१ 'समस्या—पूरणादिशाया' इति लेखकदोषेण A. पुस्तके।
२ 'जोउ' A. 'जाओ' B. ३ 'कन्या सहस्तेः(स्ते ?)' A.
४ 'अस्यांग ? मातङ्गऋषिः' A.
५ 'गुणगणे(णैः ?)र्हू(र्हृ ?)त' A.
६ 'क्लिमागं(ङ्गं ?)' A. ७ 'उपल :..' A.

बोधितास्तं क्षमयामासुर्ब्राह्मणाः। प्रत्यलाभयंश्च भक्ताद्यैर्विदधे विबु[1]धैर्गन्धोदकवृष्टिः पुष्पवृष्टिर्दुन्दुभिवादनं वसुधारापातश्च।

अस्यां

बाणा(राण ?)रसीय(प ?)कोट्ठए पासे गोवालिभद्दसेणे य।
णंदसिरी पउमद्दह रायगिहे सेवि(णि ?)ए वीरे॥
बाणा(राण ?)रसीनय[2]रीए अणगारे धम्मघो[3]सधम्मजसे।
मासस्सुय पारणए गोश्र(उ ?)लगंगा य अणुकंपा॥

एतदावश्यकनिर्युक्तिस्थं संविधानकद्वयमजनि। तथा हि—

अत्रैव पुर्यां भद्रसेनो जीर्णश्रेष्ठी। तस्य भार्या नन्दा। तयोः पुत्री[4] नन्दश्रीर्वरकरहिता। अत्रैव कोष्ठके चैत्येऽन्यदा पार्श्वस्वामी समवासरत्। नन्दश्रीः प्राव्राजीद्गोपाल्यार्यायाः शिष्यतयार्पिता। सा च पूर्वमुग्रं विहृत्य पश्चादवसन्नीभूता हस्त-पादाद्यक्षालयत्। साध्वीभिर्वार्यमाणा तु विभक्तायां वसतौ स्थिता। तद[5]नालोच्य मृता क्षुल्लहिमवति पद्मह्रद(दे ?)[6]श्रीदेवी जज्ञे देवगणिका। भगवतः श्रीवीरस्य राजगृहे समवसृतस्याग्रे नाट्यविधिमुपदर्श्य गता। अन्ये त्वाहुः—करिणीरूपेण वात-निसर्गमकरोत्। श्रेणिकेन तस्याः स्वरूपे पृष्टे भगवानाख्यत् तस्याः पूर्वभवावसन्नतावृत्तम्।

---

१ 'विं(वि ?)बुधैः' A.
२ 'नयरी[ए ?]' A. B.
३ 'धंमघो(घो ?)स' B.
४ 'पु[त्री ?]नन्दश्रीः' A. B.
५ 'तदु(द ?)नालोच्य' B.
६ 'पद्मह्र(ह्र ?)दश्रीः' B.

अत्रैव पुर्यां धर्मघोषधर्मयशसौ दावनागरौ वर्षारात्रमवस्थाताम्। तौ मासं मासं क्षपणेनास्ताम्। अन्यदा चतुर्थपारणके तृतीयपौरुष्यां विहाराय प्रस्थितौ शारदातपेनार्तौ तृषितौ गङ्गामुत्तरन्तौ मनसापि नाम्भ ऐच्छतामनेषणीयमिति। देवता तद्गुणावर्जिता गोकुलं विकुर्व्य गङ्गोत्तीर्णौ तौ दध्यादिभिरुपन्यमन्त्रयत्। तौ दत्तोपयोगौ ज्ञा[1]तवन्तौ यथेयं मायेति प्रत्यषेधताम्। पुरःप्रस्थितयोस्त[2]योरनुकम्पया वार्दलं व्यकार्षीद्देवता। तौ चार्द्रायां भूमौ शीतलवाताप्यायितौ ग्रामं प्राप्य शुद्धो[3]ञ्छमादिषा(शा?)तामिति।

श्रीमदयोध्यायामिक्ष्वाकुवं[4]श्यः श्री[5]हरिश्चन्द्रो महानरेन्द्रस्त्रिशङ्कुपुत्र उशीनरनृपसुता(त?)या सुतारादेव्या रोहिताश्वेन च पुत्रेण सहितः सुखमनुभवंश्चिरमशा[स?]त् काश्यपीम्। एकदा सौधर्माधिपतिर्दिवि दिविजपरिषदि तस्य सत्त्ववर्णनामा(म)करोत्। तदश्रद्दधानावुभौ गीर्वाणौ चन्द्रचूडमणिप्रभनामानौ वसुंधरामवतीर्णौ। तयोरेको वनवराहरूपं विकृत्यायोध्यापरिसरस्थितशक्रावतारचैत्याश्रमं सं(स?)संर[6]म्भं भु(भ?)ङ्क्तुं[7] प्रववृते। अन्येद्युः सदसि सिंहासनस्थितो हरिश्चन्द्रमहीन्द्रस्तमाश्रमोपप्लवं शूकरोपज्ञं श्रुत्वा तत्र गत्वा बाणप्रहारेण तं वराहं प्रहृतवान्। तस्मिंश्च समरे तु(ऽन्त?)र्हिते गर्हितेतरचरितः स यावत्तं प्रदेश[8]मविशत्तावत्तत्र हरिणीं स्वबाणप्रहतां तस्याः स्फुरन्तं च

---

१ 'यान्त(ज्ञात?)वन्तौ' A. २ 'तयोः' इति A. पुस्तके नास्ति।
३ 'शुद्धौञ्छ(द्धोञ्छ?)' B. ४ 'इस्वा[कु?]वंश्यः' B.
५ '[श्री?]हरिश्चन्द्रो' B. ६ '[स?]संरम्भ' A.
७ 'भङ्क्तुं' B. ८ 'प्रवे(दे?)शमव(वि?)शन्' A. B.

गलितं गर्भं निभाल्य कपिञ्जलकुन्तलमित्राभ्यां सह पर्यालोच्य भ्रूणघ्नं स्वं शोचयन् प्रायश्चित्तग्रहणार्थं कुलपतिमुपसृत्य नमस्कृत्य गृहीत्वा चाशिषं यावदास्ते तावद्वञ्चना[१] नाम कुलपतिकन्यका तुमुलमतुलमकार्षीत्। व्याहार्षीच्च ततोऽ(तात!?) (अ)नेन पापीयसा मन्मृगी हता। तन्मरणे च मम मन्मातुश्च मरणं भविष्यतीति निशम्य कुपि[२]तः कुलपतिर्नृपतये। ततस्तत्पदोर्निपत्य नरपतिरलपत्। प्रभो! सकलामपि वसुधां प्रतिगृह्य मामेतस्मादेनसो मोचय वञ्चनायाश्च मरणनिवारणाय हेम[३]लक्षं दास्यामीति। तेनाप्यो[४]मिति प्रति[५]पन्ने सति कौटिल्यमृषिं सह कृत्वा नृपः स्वपुरीमा(म?)गात्। ततो वसुभूतेर्मन्त्रिणः कुन्तलस्य च सुहृदस्तत्स्वरूपमावेद्य कोशाग्निष्कलक्षमानाययत्। ततः स्मित्वा तापसः साङ्कारको व्याकरोदस्मभ्यं जल[६]धिमेखलामखिलामिलां लमदाः। ततोऽस्म[७]दीयमेव वस्त्वस्मभ्यमेवं दीयत इति कोऽयं न्यायः। अथ वसु[८]भूतिः किमपि ब्रुवाणः कुलपतिना शापादकारि कीरः, कुन्तलस्तु शृगालः। तौ च वनम[९]ध्येऽवसताम्। राजा च मासमवधिं मार्गयित्वा रोहिताश्वमङ्कुलौ लगयित्वा सुतारया सह काशीं प्रति प्राचलत्। क्रमादिमां पुरीं प्राप्य संस्थायां

१ 'वन्द(ञ्च?)ना' A. २ 'कुपिता(तः?)' A.
३ 'हे(हे?)मलच्यं(क्षं?)' A. ४ 'तेनाप्योव(मि?)ति' B.
५ 'प्रतिपन्न(न्ने?)व(स?)ति' A. B.
६ 'जलधिपे(मे?)खलामखिलामिणाम्' A. B.
७ 'ततोऽस्मदीय[मेव वस्त्वस्मभ्यमेवं दीय]त इति' B.
८ 'वसुभूतिं(तिः?)' A. B. ९ 'अध्यवसतां' A. B.

स्थितः । तत्र शिरसि तृ[1]णं दत्वा वज्रहृदयविप्रहस्ते देवीं कुमारं च हेमषट्सहस्रया विचिक्रिये । सा तत्र खण्डनपेषणादिकर्माणि [2]निर्ममे । दारकश्च समित्पत्रपुष्पफलान्याजहार । राज्ञि चिन्ता-चान्तचेतसि कुलपतिः कनकं मार्गयितुमा(म?)गात् । दत्तं तस्मै राज्ञा काञ्चनसहस्रषट्कम् । कुलपतौ स्तोकमिति कुप्यत्यङ्गारको-ऽवोचद्गोः ! किमर्थं पत्नीमपत्यं च व्य(वि?)क्रीणीथाः । अचत्यं चन्द्रशेखरं नरेश्वरं किं[3] न याचसे वसु[4]लक्षम् । राज्ञोक्त-मस्मत्कुले नेदं सिध्यति । डों[5]म्बस्यापि वेश्मनि कर्मकरत्वमुररीकृत्य दास्यामि तव काञ्चनमिति । ततः कर्म कर्तुं [6]प्रवृत्तश्चण्डालेन श्म(श्म?)शानरक्षणे नियुक्तः । ततः परं यथा (तथा ?) ताभ्या-ममराभ्यामकारि मारिः पुर्यां यथा भूपादेशानीतमान्त्रिकेण राक्षसीप्रवादमारोप्य सुतारा मण्डलमानीय रासभमारोपिता । यथा शुकः पावके दत्तझम्पोऽपि न दग्धो यथा पितृवने वटोत्कलम्बितं नरं तटे च रुदन्तीं सुदतीं विलोक्य नराद्विद्या-धरापहारवृत्तमाकर्ण्य तमुन्मोच्य तत् स्थाने हरिश्चन्द्रः स्वं नियुज्य होमकुण्डे स्वमांसखण्डानि आर्पयद् । यथा कुण्डमध्यान्मुखं निर्गतम् । शृगालश्चारटत् तापसेन यथा व्रणरोहणमवनीपतेरकारि, यथा च पुष्पाणि गृ[7]ह्णन् रोहिताश्वो निः[8]शूकं दन्दशूकेन दष्टः । संस्कारयितुमानीताच्च तस्मात्

---

१ 'त्र(तृ?)णं' B. २ 'निर्मथे(मे?)' A.
३ 'कि(किं?)न' B. ४ 'वलसु(सुल?)क्षम्' B.
५ '[डों]बस्यापि' B. ६ 'कर्तुं[प्रवृत्त]श्चण्डालेन' B.
७ 'गृह्य(ह्ण?)न्' A. B. ८ 'निःशूकं(कं?)' B.

कण्ट(ष्टि ?)क[1]मयाचिष्ट नृपतिः । यथा च सत्त्वपरीक्षानि[2]र्वहण(ण)-प्रमुदितप्रकटितनिजरूपचिदशकृतपुष्पवृष्टि जयजयध्वनिः सर्वजनैः प्रशंसितः सात्त्विकशिरोमणिरिति । यथा च बहिर्मुखमुखादराद्दादि-पुष्पवृष्टिपर्यन्तं दिव्यमायाविलसितमवबुध्य यावच्चेतसि चमत्कृतस्ता-वत्स्वं स्वपुर्यां सदसि सिंहासनस्थं सपरिवारमपश्यत् । त[3]देतद्देवी-कुमारविक्रयादि दिव्यपुष्पपर्या(र्य ?)वसानं श्रीहरिश्चन्द्रस्य चरित्रं सत्त्वपरीक्षानिकषोऽस्यामेव पुर्यामजनि जनजनितविस्मयम् ।

यच्च [4]कासी(शी)माहात्म्ये प्रथमगुणस्थानीयैरभिधीयते यद्वाराणस्यां कलियुगप्रवेशो नास्ति । तथाच प्राप्तनिधनाः कीट-पतङ्गभ्रमरादयः कृतानेकचतुर्विधहत्यादिपा[5]प्मानोऽ[6]पि मनुष्या-दयो वा शिवसायुज्य[7]मि[ति ?]प्रतीत्यादियुक्तिरिक्तं तद[8]स्माभिः श्रद्धातुमपि दुःशकम्, किं पुनः कल्पे जल्पितुमित्युपेक्षणीय-मेवैतत् । धातुवादरसवादखन्यवादमन्त्रविद्याविदुराः शब्दानुशासन-तर्कनाटकालंकारज्योति[9]क(ज्योतिष ?)चूडामणिनिमित्तशास्त्रसाहि-त्यादिविद्यानिपुणाश्च पुरुषा अस्यां परिव्राजकेषु जटाधरेषु योगिषु ब्राह्मणादिचातुर्वर्ण्ये च नैके रसिकमनांसि प्रीण[10]यन्ति । चतु-र्दिगन्तदेशा[11]न्तरवास्तव्याश्चास्यां जना दृ[12]श्यन्ते सकल[13]कला-

---

[1] 'कपिट(पट ?)कं' B. [2] 'निर्वट(ह ?)न(ण ?)' A. B.
[3] 'तद्दे(दे ?)तद्' A. [4] 'कासी(शी ?)माहात्म्ये' A. B.
[5] 'प(पा ?)प्मानो' A. [6] 'हि' B. [7] 'इभ(प्र ?)ति' A.
[8] 'तस्माद(दस्मा ?)भिः' B. [9] 'ज्योतिक (ज्योतिष ?)' A. B.
[10] 'प्रीयंयंति (णयन्ति ?)' B. [11] 'देशान्त[र ?)' B.
[12] 'दृश्य[न्ते ?]' A. [13] 'सकल[कला ?]कलाप' A.

कलाप्रपरिकलनकौतूहलिनः। **वारा[१]णसी** चेयं संप्रति चतुर्धा-विभक्ता दृश्यन्ते। तद् यथा **देववाराणसी** यत्र **विश्वनाथ**-प्रासादः। तन्मध्ये चाश्मनं जैनं चतुर्विं[२]शतिपट्टं पूजारूढमद्यापि विद्यते। द्वितीया[२] राजधानी **वाराणसी** यत्राद्यत्वे यव[३]नाः। तृतीया **मदनवाराणसी** चतुर्थी **विजयवाराणसी**ति। लौकिकानि च तीर्थानि अस्यां क इव परिसंख्यातुमीश्वरः।

अन्तर्वणं दन्तखातं तडागं निकषा **श्रीपार्श्वनाथस्य** चैत्यमनेकप्रतिमाविभूषितमास्ते। अस्याममलपरिमलभराकृष्टभ्रमरकुलसंकुलानि सरसीषु नानाजातीयानि कमलानि। अस्यां च प्रतिपदमकुतोभयाः संचरिष्णवो निचाय्यन्ते शाखामृगा मृगधूर्ताश्च। अस्याः क्रोशत्रितये **धर्मेक्षा**नाम संनिवेशो यत्र **बोधिसत्त्व**स्योच्चैस्तरशिखरचुम्बितगगनमायतनम्। अस्याश्च सार्धयोजनद्वयात् परतश्चन्द्रावती नाम नगरी यस्यां **श्रीचन्द्रप्रभो**र्गर्भावतारादिकल्या[४]णि(ण)कचतुष्टयमखिलभुवनजनतुष्टिकरमजनिष्ट।

गङ्गोदकेन च जिनद्व[५]यजन्मना च
प्राका[६]शि **काशिनगरी** न गरीयसी कैः।
तस्या इति व्यधित कल्पमनल्पभूतेः।
श्रीमान् **जिनप्रभ इति** प्रथितो मुनीन्द्रः॥

**श्रीवाराणसी**कल्पः॥ ग्रं० ११२। अ० २२॥

---

१ 'वाणार(राण)सी' B. २ 'द्वितीय(या ?)' B.
३ 'यवना(:)' A. ४ 'कल्याणि(णा ?)क' A.B.
५ 'जिनदय(म ?)जन्मना' A.B. ६ 'प्र(प्रा ?)काशि' A.B.

सिरिवीरस्स गणहरे इक्कारस अह्वमाइणो नमिउं ।
तेसिं चिअ कप्पलवं[1] भणामि समयाणुसारेण ॥ १ ॥
नामं ठाणं जणया जणणीओ जम्मरिक्खगुत्ताइं ।
गिहिपरि[2]आओ संसयवयदिणपुरदेसकाला य ॥ २ ॥
वयपरिवारो छउमत्थकेवलित्तेसु वरिससंखा य ।
रूपं रिद्धी आउं सिव[3]ठाण तवुत्ति दाराइं ॥ ३ ॥

तत्थ गणहराण नामाइं-इंदभूई, अग्गिभूई, वाउभूई, विअत्तो, सुहम्मसामी, मंडिओ, मोरिअपुत्तो, अकंपिओ, अच(य ?)लभाया, मेअज्जो, पभासो अ ।

इंदभू[4]ईप्पमुहा तिन्नि स[5]होअरा मगहदेसे गोव्वरगामे उप्पन्ना । विअत्तो सुहम्मो अ दोवि कोल्लागसंनि[6]वेसे । मंडिओ, मोरिअपुत्तो अ दोवि मोरिअसंनिवेसे । अकंपिओ मिहिलाए । अचलभाया कोसलाए । मेअज्जो वच्छदेसे तुंगिअ[7]संनिवेसे । पभासो रायगिहे ।

जणओ-तिण्हं सोअराणं वसुभूई, विअत्तस्स धणमित्तो, अज्जसुहम्मस्स धंमिल्लो, मंडिअस्स धणदेवो, मोरि[8]अ-

---

१ 'कल्प(प्प ?)लवम्' A.

२ 'गिहपरिआऊ(ओ ?)' A., 'गिहिपरियाओ ?)' B.

३ 'सिवठाणुतवुत्तिदारीइ' B. ४ 'इंदभूई' A.B.

५ 'स[होअरा—' इत्यारभ्य'संनिवेसे' इत्यन्तः पाठः A पुस्तके नास्ति। ६ 'संनिवेशे(से)' B.

७ 'उं(तुं ?)गिअसंनिवेशे(से)' B. ८ 'मोरिअपुत्तस्स मोरिओ अकंपिअस्स देवो' इति A पुस्तके नास्ति।

पुत्तस्स मोरिश्रो, अकंपिअस्स[1] देवो, अयलभाउणो वसू, मेअ[2]ज्जस्स दत्तो, पभासस्स बलो।

जणणी-तिण्हं भाउआणं पुहवी। विअत्तस्स वा(वी?)-रुणी। सुहम्मस्स भद्दिला। मंडियस्स विजयदेवो। मोरिअपुत्तस्स सा चेव, जओ धणदेवे परलोअं गए मोरि-एण सा संगहिया[3], अविरो[4]हो अ तम्मि देसे। अकंपिअस्स जयंती। अयलभाउणो नंदा। मेअज्जस्स वरुणदेवा। पभासस्स अइभद्दत्ति।

नक्खत्तं-इंदभूइणो जिट्ठा। अग्गिभूइणो कित्तिआ। वाउभू[5]इणो साई। विअत्तस्स सवणो। सुहम्मसामिणो उत्तर[6]फग्गुणीओ। मंडिअस्स महाओ। मोरिअपुत्तस्स मिगसिरं। अकंपिअस्स उत्तरासाढा। अयलभाउणो मिगसिरं। मेअज(ज्ज?)स्स[7] अस्सिणी। पभासस्स पूसुत्ति।

तिन्नि भाउणो गोअ[8]मगुत्ता। विअत्तो भारद्दाय-सगुत्तो। सुहम्मो अग्गिवेसायणसगुत्तो। मंडिओ वासिट्ठसगुत्तो। मोरिअपुत्तो कासवगुत्तो। अकंपिओ गोअमसगुत्तो। अयलभाया हारिअसगुत्तो। मेअज्जो पभासो अ कोडिन्नसगुत्तुत्ति।

---

१ 'अकंपिअस्स' B. २ 'मेअज्जस्स [दत्तो ?] पभासस्स ब...' B.
३ 'गहिआ' B. ४ 'अवरोहो' A., 'अविराहो' B.
५ 'वाइ(उ ?) भूय(इ ?)णो' A. B.
६ 'उत्तरफग्गु(ग्गु ?)णीओ' A. ७ 'मेअज्ज(ज ?)स्स' B.
८ 'गोअमपु(गु ?)त्ता' B.

गिहत्थपरिआओ-इंदभूइणो पंचासं वासाइं। अग्गिभूइस्स बायालीसं[1]। विअत्तस्स पन्नासं। सुहम्मसामिस्स वि पन्नासं। मंडिअस्स तेवन्ना। मोरि[2]अपुत्तस्स पणसट्ठी। अकंपिअस्स अडयालीसं। अयलभाउणो छाया- लीसं। मेअज्जस्स छत्तीसं। पभासस्स सोलसत्ति।

संसओ-इंदभूइस्स जस्स(?)जीवे। भगवया महावीरेणं छिन्नो। अग्गिभूइणो कम्मे। वाउभूइणोतज्जी[3]वे तस्सरीरे। विअत्तस्स पंचमहाभूएसु। सुह[4]म्मसामिणो जो जारिसो इह भवे परभवे वि सो तारिसो चेव त्ति। मंडियस्स बंधमुक्खेसु मोरिय(अ?)पुत्तस्स देवेसु। अकंपिअस्स नरएसु। अयल- भाउणो पु[5]ण्णपावेसु। मेअज्जस्स परलोए। पभासस्स निव्वाणेत्ति।

दिक्खागहणमिक्कार[6]सण्हं पि देवाणमागमणं दट्ठूण जस्स वाडयाओ उवट्ठिआणं वइसाहसुद्धइक्कारसीए मज्झिमपावाए नयरीए महासेण[7]वणुज्जाने पुव्वन्हदेसकालेत्ति।

इंदभूइ(ई?)पमुहाणं पंचण्हं पंचराया खंडिया सह निक्खंता। मंडिअमोरिअपुत्ताणं पत्तेअं सट्ढा तिन्निसया। अकंपि- आईणं चउण्हं पत्तेअं तिन्निसयत्ति।

---

१ 'वाउभूयस्स बायालीसं' इत्यधिकं A. पुस्तके।

२ मोरिअस्स A.

३ तज्जीवे A.

४ 'सुहंस(हम्म)' B.

५ 'पुंन(पुण्ण)' A. B.

६ 'इक्कारसन्ह(ण्हं ?)पि' A. B.

७ 'महास(से ?)ण' A.

छउमत्थ पं[१]रिआओ-इंदभूइस्स तीसं वासाइं, अग्गि-भूइस्स दुवा[२]लस, वाउभूइस्स दस, विअत्तस्स दुवालस, सुहम्मस्स बायालीसं, मंडिअमोरिअपुत्ताणं पत्ते[३]यं चउद्दस, अकंपिअस्स नव, अयलभाउणो दुवालस, मेअज्जस्स दस, पभासस्स अट्ठि(ट्ठ?)त्ति।

केवलिविहारेणं इंद[४]भूई दुवालसवासाइं विहरिओ। अग्गिभूई सोलस, वाउभूई विअत्तो अ पत्तेअं अट्ठारस, अज्जसुहम्मस्स अट्ठ, मंडिअमोरिअपुत्ताणं पत्तेअं सोलस, अकंपिअस्स एगवीसं, अयलभाउणो चउद्दस, मेअज्जस्स पभासस्स य पत्तेअं सोलसत्ति।

इक्कारसण्ह वि वज्जरिसहनारायं संघयणं, समचउरसं संठाणं, कणगप्पहो देहवण्णो। रूवसंपया पुण तेसिं एवं तित्थयराणं।

"सव्वसुरा जइ रूवं अंगुट्ठपमाण[५]यं विउवि(व्वि?)ज्जा।
जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥ १ ॥ [त्ति]"

वयणाओ अप्पडि[६]रूवं रूवं। तओ किंचूणं गणहराणं। तत्तो वि हीणं आहारगसरीरस्स। तत्तो वि अणुत्तरसुराणं। तत्तो जहक्कमं[७] नवमगेविज्जगपज्जवसाणदेवाणं हीणयरं। तत्तो वि कमेण अच्चुआइसोहम्मन्तदेवाणं हीण[८]यरं। तत्तो वि भवण-वईणं, तत्तो वि जोइसिआणं, तत्तो वि वंतरदेवाणं, तत्तो वि

---

१ 'परियाओ' B. २ 'दुवालस्स(स?)' A.
३ 'पत्तेय(यं?)' A; 'पत्तेअं' B. ४ 'इंदु(द?)भूइ' B.
५ 'प्प(प?)माणयं' A. ६ 'अप्पडि रूपं(वं?) रूपं(वं?)' A.
७ 'जहक(क्क?)मं?' A. ८ 'हीयया(हीया)यरं' A.

चक्कवट्टीणं हीणयरं। तत्तो वि अद्धचक्कवट्टीणं, तत्तो वि बलदेवाणं हीणयरं, तत्तो वि सेसजणाणं छट्ठाणवडिग्रं। एवं विसिट्ठं[1] रूवं गणहराणं।

सुग्रं पुण अगारवासे चउद्दस विज्जाठा[2]णाइं, सामण्णे पुण दुवालसंगं गणिपिड[3]गं सव्वेसिं। जओ, सव्वे वि दुवालसंग-प्पणेग्रारो।

लद्धीओ पुण सव्वेसिं गणहराण सव्वाओ वि हवंति। तं जहा-बुद्धिलद्धी अट्ठारसविहा-केवलनाणं, ओहिनाणं, मणपज्ज-वनाणं, बीअबुद्धी, कुट्ठबुद्धी, पयाणुसारित्तं, संभिन्नसोइत्तं, दूरासा-मणसामत्थं, दूरफरिसणसामत्थं, दूरदरिसणसामत्थं, दूराग्घाण-सामत्थं, दूरसवणसामत्थं दसपुव्वित्तं, चउद्दसपुव्वित्तं, अट्ठंगमहा-निमित्तं(त्त?)कोसल्लं, पन्नासवणत्तं, पत्तेअबुद्धत्तं, वायत्तं च।

किरिआविसया लद्धी दुविहा-चारणत्तं आग(गा ?)-सगा[4]मित्तं च।

वेउव्वि[5]अलद्धी अणेगवि[6]धा(हा) अणिमा, महिमा, लघिमा, गरिमा, पत्ती[7](त्ती), पक्कामित्तं, ईसित्तं, वसित्तं, अप्पडिघाओ, अंतद्धाणं, कामरूवित्तमिच्चाइ।

तवाइसयलद्धी सत्तविहाउग्गत[8]वत्तं, दित्ततवत्तं, महातवत्तं, घोरतवत्तं, घोरपरक्कमत्तं, घोरबंभयारित्तं, अघोरगुणबंभयारित्तं च।

---

१ 'विस(सि ?)ट्ठं' A. २ 'वा(ठा ?)णाइं' B.
३ 'पीड(पिड ?)ग' B. ४ 'अगासगामित्तं' B.
५ 'वेअ(उ)व्विअ' A. B. ६ 'अणेगविहा' A. B.
७ 'पत्तो(त्ती ?)' A. ८ 'उवगत(ग्गत)वत्तं' A.

बललद्धी तिविहा—मणोबलित्तं, वयणबलित्तं, काय-बलित्तं। ३।

ओसहिलद्धी अट्ठविहा—आमोसहिलद्धी, खेलोसहिलद्धी, जल्लोसहिलद्धी, मलोसहिलद्धी, विप्पोसहिलद्धी, सव्वोसहिलद्धी, आसगअविसत्तं दिट्ठिअविसत्तं। ८।

रसलद्धी छविहा—वयणविसत्तं दिट्ठिवि[1]सत्तं, खीरासवित्तं, महुआसवित्तं, स(स)प्पि[2]रासवित्तं, अमिआसवित्तं।

खित्तलद्धी दुविहा पन्नत्ता। अक्खीणमहाणसत्तं, अक्खीण-महालयत्तं च। एआहिं लद्धीहिं संपन्ना सव्वे वि।

सव्वाउअं इंदभू[3]इस्स बाणउई संवच्छराई। अग्गि[4]-भू(इ)स्स चउहत्तरी, वाउभूइस्स सत्तरी, विअत्तस्स असीई, अज्जसुहम्मस्स सयं, मंडिअस्स[5] तेआसीई मोरिअपुत्तस्स पंचनउई, अकंपिअस्स अट्ठहत्तरी, अयलभाउणो बाहत्तरी, मेअज्जस्स बासट्ठी, पहासस्स चालीसं ति।

निव्वाणं च सव्वेसिं पाउवगमणमासिअभत्तेण रायगिहे नगरे वेभारपव्वए संजायं। पढमपंचमवज्जा नवगणहरा जीवंते भयवंतम्मि वीरे मुक्खं पत्ता। इंदभूई अज्जसुहम्मो अ तेम्मि निव्वाणगए निव्वुअत्ति।

---

१ 'दिट्ठिविसत्तं' इति A पुस्तके नास्ति। २ 'सप्पि(सप्पि ?)रास-वित्तं' A. B. ३ 'इंदभूय(इ ?)स्स' B. ४ 'अग्गिभूय-(इ ?)स्स A. B. ५ 'मंडिय(अ ?)स्स' B.

गोअमसामिप्पभिई गणपऊणो पवयणंबवणमऊ[1]णो ।
सुग[2]हीअनामधेया महोदयं मज्झ उवणिंतु ॥ १ ॥
जो गणहरकप्पमिणं पइपच्चू[3]सं पढे पसन्नमणो ।
करयलमहिवसइसया कल्लाणपरंपरा तस्स ॥ २ ॥
जिणपहसू[4]रीहिँ कओ गहवसुसिहिकुमिअ(१३८९) विक्कमसमासु ।
जिट्ठसिअपंचमिबुहे गणहरकप्पो चिरं जयइ ॥ ३ ॥

इति श्रीमहावीरगणधरकल्पः ॥ ग्रं. ६८ ॥

---

१ 'मह(ऊ ?)णो' B.

२ 'सुगहि(ही ?)अ' A.B.

३ 'पइप...सं' B.

४ 'सूरीहिं(हिँ)' A.B.

नमिऊण पासनाहं पउमावइनागरायकयसेवं।
कोकावसहीपासस्स किं पि वत्तव्वयं भणिमो ॥ १ ॥

सिरिपण्हवाहणकुलसंभूओ हरि[1]सउरीयगच्छा[2]लंकारभूसिओ अभयदेवसूरी हरिस[3]उराओ एगया गामाणुगामं विहरंतो सिरिअणहिल्लवाडयपट्टणमागओ। ठिओ बाहिं पएसे सपरिवारो। अन्नया सिरिजयसिंहदेवनरिंदेण गयखंधारूढेण रायवाडिआगएण दिट्ठो मलमलिणवत्थदेहो। रायणा गयखंधाओ [4]उअरिऊण वंदिऊण दुक्करका[5]रउत्ति दिन्नं मलधारित्ति नामं। अब्भत्थिऊण नयरमज्झे नीओ रण्णा। दिन्नो उवस्सयो घयवसहि(ही?)समीवे। तत्थ ठिआ सूरिणो। तस्स पट्टे कालक्कमेण अणेगगंथनिम्माणविक्खायकित्ती सिरिहेमचंदसूरी संजाओ। ते अ पइदिअहं वासारत्तचउम्मासीए घयवसहीए गंतूण वक्खाणं करिंति। अन्नया कस्स वि घयवस[6]हीए गुट्ठि[7]अस्स [8]पिउकज्जे बलिवित्थाराइकरणं घयवसहीचेइए आढत्तं। तओ वक्खाणकरणत्थमागया सिरिहेमचंदसूरी। पडिसिद्धा गुट्ठिएहिं जहा—अज्ज वक्खाणं इत्थ [9]न कायव्वं। इत्थ बलिमंडणाइणा नत्थि ओगासो। तओ सूरीहिं भणिअं थो[10]वमेव अज्ज वक्खाणिस्सामो मा चउमासीवक्खाण—

---

१ 'हरिसओ(उ?)रीय' A.B.
२ 'गछा(च्छा?)' B.
३ 'हरिसओ(उ?)' A.B.
४ 'ओ(उ?)अरिऊण' B.
५ 'कारिओ(उ?)त्ति' B.
६ 'घि(घ?)य' A.B.
७ 'गुट्ठियस्स' A.B.
८ 'पिओ(उ?)' A.B.
९ 'न व (च?)' A.
१० '···वमेव' B.

[१]विच्छेओ भविस्सइत्ति। तं च न पडिवन्नं गुट्ठिएहिं। तओ अमरिसविलक्खमाणसा पडिआगया उ[२]वस्सयमायरिआ। तओ दूमिअचित्ते गुरुणो नाऊण सोवन्निअमोखदेव [३]नायगनामगेहिं सड्ढेहिं मा अन्नया वि परचेइए एवंविहो अवमाणो होउ त्ति घयवसहीसमीवे चेइ[४]अकारावणत्थं भू[५]मी मग्गिया, न य कत्थ वि लद्धा। तओ कोकओ नाम सिट्ठी भूमिं मग्गिओ। वारिओ अ सो 'घयवसहीगुट्ठिएहिं तिउ[६]णइम्मदाणइच्छणेण। तओ ससंघा आगया सूरिणो कोकयस्स घरं। तेण वि पडिवत्तिं काऊण भणिअं—'दिन्ना मए भूमी जहोचिअमुल्लेण, परं मज्झ नामेणं चेइअं कारेअव्वं।' तओ सूरिहिं सावएहिं अ [७]तहत्ति पडिवन्नं। तत्थ य घयवसहीआसन्नं कारिअं चेइअं कोकावसहि त्ति। ठाविओ तत्थ सिरिपासनाहो पूइज्जए तिक्कालं।

कालक्कमेण सिरिभीमदेवरज्जे पट्टणं भंजंतेण मालवरण्णा [८]सा पासनाहपडिमा वि भग्गा। तओ सोवन्निअनायग-संताणुप्पन्नेहिं रामदेवआसाधरसिट्ठीहिं उद्धारो कारेउ-माढत्तो। आरासणाओ फलहीतिगं आणीअं, न य तं निद्दोसं तओ बिंबतिगे वि घडिए न परितोसो संजाओ गुरुणं सावयाणं

१ 'विछे(च्छे ?)ओ' B. २ 'ओ(उ ?)वस्सय' B.

३ 'नारायर्ग(?)' A. 'नायगं'। ४ 'चेइ[अ]' B.

५ 'भूमी मागया' A. ६ 'तिओ(उ ?)ण' B.

७ 'तह्नि(ह ?)त्ति' A. ८ 'सो(सा ?)' A.

च। तओ रामदेवेण[1] अभिग्गहो गहिओ, जहाहं अकाराविअ पासमामिबिंबं न भुंजामित्ति। गुरुणो वि उववासे कुणंति म्ह। तओ अट्ठमोववासे रामदेवस्स देवादेसो जाओ। जहा—जत्थ गोहलिआ स[2]पुप्फक्खया दीसइ, तस्स हिट्ठा, इत्थेव चेइअपरि[3]सरे इत्तिएहिं हत्थेहिं फलही चिट्ठइ त्ति। खणिऊण लद्धा फलही। कारिअं निरुवमरूवं-पासनाहबिंबं। बारससयछासट्ठे [१२६६ वि० सं०-1209 A.D.] विक्कमसंवच्छरे देवाणंदसूरीहिं पइट्ठिअं ठाविअं च चेइए पसिद्धं च कोकापासनाहुत्ति। रामदेवस्स पुत्ता तिहुणा जाजा नामाणो। तिहुणागस्स पुत्तो मल्लओ। तस्स पुत्ता देल्हणजइतसीहनामधेया। ते अ पूअंति पइदिणं पासनाहं।

अन्नया देल्हणस्स सिरिसंखेसरपासनाहेण सुमिणयं दिन्नं। जहा—पहाए घडिआचउक्कं जाव अहं कोकापासनाहपडिमाए सन्निहिस्सामि। तम्मि घडिआचउक्के एअम्मि बिंबे पूइए किर अहं पूइउत्ति। तहेव लोगेहिं पूइज्जमाणो कोकापासनाहो पूरेइ संखेसरपासनाहु व्व पच्चए। संखेसरपासनाहविसया पूजाजत्ताइ[4] अभिग्गहा तत्थे व पु[5]ज्जंति जणाणं। एवं सन्निहिअपाडिहेरो जाओ भयवं

---

१ 'रामदेवेन' A.B. २ 'स पुष्प(प्फ ?)' B.
३ परिसरोऽस्ति(रेइत्ति ?)एहिं। ४ 'पूज्या (जा ?)' A.B.
५ 'पुज्ज(ज्जं ?)ति' B.

कोकयपासनाहो तिन्नीसपव्वपमाणमुत्तो मलधारिगच्छ-पडिबद्धो ।

अणहिल्लपट्टणमंडणसिरिकोकावस[1]हिपासनाहस्स ।
इअ एस कप्पलेसो होउ जणाणं धुअकिलेसो ॥

इति को[2]कापार्श्वनाथकल्पः समाप्तः ॥ ग्रं० ४० ॥

---

१ 'वसहिं (हि ?)' A.B. २ 'श्रीकोकापार्श्वनाथकल्पः' B.

नमिअ जिणे उवजीविअ वक्काइं पुव्वपुरिससीहाणं ।
कोडिसिलाए कप्पं जिण[1]पहसूरी पयासेइ ॥ १ ॥
इह भरहखित्तमज्झे तित्थं मगहासु अत्थि[2]
कोडिसिला ।
अज्ज वि जं पूइज्जइ चारणसुरअसुरजक्खेहिं ॥ २ ॥
भरहड्ढवासिणीहिं अहिं[3]ट्ठिआ देवयाहिं जा सययं ।
जोअणमेगं पिहुला जोअणमेगं च उस्सीहो ॥ ३ ॥
तिक्खंडपुहविपइणो निअं परिक्खंति बाहु[4]बलमखिला ।
उप्पाडिअ जं हरिणो सुरनरखयराण पच्चक्खं ॥ ४ ॥
पढमेण कया छत्तं बीएणं पाविआ सिरं जाव ।
तइएणं गीवाए तओ चउत्थेण वच्छ[5]य(थ ?)ले ॥ ५ ॥
उअरंतं पंचमएण तइय छट्टेण कडि[6]अडं नीआ ।
उ(ऊ ?)रुपज्जंते सत्तमेण[7] उप्पाडिआ हरिणा ॥ ६ ॥
जाणूसु अट्ठमेणं नीआ चउरंगुलं तु भूमीओ ।
उद्धरिआ चरमेणं कण्हेणं वामबाहाए ॥ ७ ॥
अवसप्पिणिकालवसा कमेण हायंति माणवबलाइं ।
तित्थयराणं तु बलं सव्वेसिं होइ इगरूवं ॥ ८ ॥

---

१ 'जिणप्प(प ?)ह' A. २ 'अत्थ(त्थि ?)' A.
३ 'अहिट्ठिअ (आ ?)' A.B. ४ 'बाहुबलि(ल ?)' A.
५ 'वह(च्छ ?)यले' B. ६ 'कडिअं (अ ?) [डं]' B.
७ 'सत्तमेण' B.

उप्पाडेउं तीरइ जं बलवंतीए[1] सुहडकोडीएं।
तेणे सा कोडिसिला इक्कमेणा[2] वि हरिणा[3] उ ॥ ९ ॥
चक्काउ[4] होत्ति नामेण संतिनाहस्स गणहरो पढमो।
काऊण अणसणविहिं[5] कोडिसिलाए सिवं पत्तो ॥ १० ॥
सिरिसंतिनाहतित्थे[6] संखिज्जाओ मुणीण कोडीओ।
इत्थेव य सिद्धाओ[7] एवं सिरिकुंथुतित्थे वि ॥ ११ ॥
अरजिणवरतित्थम्मि वि बारस सिद्धाउ समणकोडीओ।
छक्कोडीउ[8] रिसीणं सिद्धाओ मल्लिजिणतित्थे ॥ १२ ॥
मुणिसुव्वयजिणतित्थे सिद्धाओ तिन्नि साहुकोडीओ।
इक्का कोडी[9] सिद्धा नमिजिणतित्थेऽणगाराणं ॥ १३ ॥
अन्ने वि अणेगे तत्थ महा[10]रिसी सासयं पयं पत्ता।
इह कोडिसिलातित्थं विक्खायं पुहविवलयम्मि ॥ १४ ॥

पुव्वायरिएहिं च इत्थ सविसेसं किं वि भणिअं तं जहा—

[11]जोअणपिहुलायामा दसन्नपव्वयसमीवि कोडिसिला।
जिणछक्कतित्थसिद्धा तत्थ अणेगाउ मुणिकोडी ॥ १५ ॥

---

१ 'बलव(वं ?)तीए' A.B. २ 'इक्काले(क्के ?)णावि' B.
३ 'हरिणाओ(उ ?)' A.B. ४ 'चक्काओ(उ ?)' A.B.
५ 'व(वि ?)हिं' A.B. ६ 'सिरिसि(?)संति' A.
७ 'सिद्धाओ (उ ?)' B. ८ 'छकोडि(कोडी ?)उ' A., 'छक्को (को ?)डीओ (उ ?)' B. ९ 'कोडा (डी ?)' A.
१० 'मह(हा ?)रिसी' A. 'महि(हा ?)रिसी' B.
११ गाथाया अस्या A. पुस्तके क्रमगणनायां षोडशसंख्योल्लिखिता प्रायोऽवतरणिकारूपं गद्यमपि परिगणितं भवेत्।

[1]पढमं संतिगणहरो चक्का[2]उहो(ऽ)णेगसाहुपरिअरि-
(वरि ?)ओ[3]।
छत्तीसजुगेहिं तओ सिध्धा[4] (द्धा ?) संखिज्जमुणिकोणी[5]
(डी ?) ॥ १६ ॥

संखिज्जा मुणिकोडी अडवीसजुगेहिं कुंथुनाहस्स।
अरजिणचउवीसजुगा बा[6]रसकोडीउ सिद्धाओ ॥ १७ ॥

मल्लिस्स वि वीसजुगा छकोडि मुणिसुव्वयस्स
कोडितिगं।
नमितित्थे इगकोडी सिद्धा तेण[7]स कोडिसिला ॥ १८ ॥

छत्ते सिरम्मि गीवा वच्छे[8]उअरे कडीइ ऊरूसु।
जाणू कहमवि जाणू नीया सा वासुदेवेण ॥ १९ ॥

इअ कोडिसिलातित्थं तिहुअणजणजणिअनिव्वुआवत्थं।
सुरनरखेअरमहिअं भविआणं कुणउ कल्लाणं ॥ २० ॥

[इति ?] श्रीकोटिशिलातीर्थकल्पः ॥
ग्रं. २४[9]। अ. ६ ॥

---

१ इयं गाथा A. पुस्तके नास्त्येव। २ 'चक्काओ(उ ?)' B.
३ 'परिअरिओ' B. ४ 'सिद्धा' B. ५ 'कोडी' इति B. पुस्तके।
६ 'बारसकोडीओ(उ ?)' A.B. ७ 'तेणसा (णेसा ?)' B.
८ 'वच्छेओ(उ ?)' A., 'वछेओ (च्छेउ ?)' B.
९ A.B. पुस्तकयोर्ग्रन्थसंख्या तु तुल्यैव। परम् A. पुस्तके षोडशी गाथा नास्त्येव। अथोभयोरपि क्रमगणना त्रयोदशीं गाथां यावदविच्छिन्ना। अग्रे च A. पुस्तके पञ्चदश्यां षोडशसंख्या निर्दिष्टा, B. पुस्तके तु पञ्चदश। चतुर्दशसंख्यातूभयोरेव नास्ति।

श्रीवस्तुपालतेजःपालौ मन्त्रीश्वरावुभावास्ताम् ।
यौ भ्रातरौ प्रसिद्धौ कीर्तनसंख्यां तयोर्ब्रूमः ॥ १ ॥

पूर्वं गुर्जरधरित्रीमण्डनायां मण्डलीमहानगर्यां श्रीवस्तुपालतेजःपालाख्या वसन्ति स्म। अन्यदा श्रीमत्पत्तनवास्तव्यप्राग्वाटान्वयठक्कुरश्रीचन्द्रपात्मजठक्कुरश्रीचण्डप्रसादाङ्गजमन्त्रिश्रीसोमकुलावतंसठक्कुरश्रीआसराजनन्दनौ कुमारदेवीकुक्षिसरोवरराजहंसौ श्रीवस्तुपालतेजःपालौ श्रीशत्रुञ्जयगिरिनारादितीर्थयात्रायै प्रस्थितौ। हडालाग्रामं गत्वा यावत् स्वां विभूतिं चिन्तयतस्तावल्लक्षत्रयं सर्वस्वं जातम्। ततः सुराष्ट्रास्वसौस्थ्यमाकलय्य लक्षमेकमवन्यां निधातुं निशीथे महाश्वत्थतलं खानयामासतुः। तयोः खानयतोः कस्यापि प्राक्तन[:] कनकपूर्णः शौल्वकलशो निरगात्। तमादाय श्रीवस्तुपालस्तेजःपालजायामनुपमादेवीं मान्यतयापृच्छत्—क्वैतन्निधीयत इति। तयोक्तं गिरिशिखर एवैतदुच्चैः स्थाप्यते यथा प्रस्तुतनिधिवन्नान्यसाद्भवति। तच्छ्रुत्वा श्रीवस्तुपालस्तद्द्रव्यं श्रीशत्रुञ्जयोज्जयन्तादावव्ययत्। कृतयात्रो व्यावृत्तो धवलक्कपुरमगात्।

अत्रान्तरे मह्रणदेवी नाम कान्यकुब्जेश्वरसुता जनकात् कंचुलिकापदे गुर्जरधरित्रीमवाप्य तदाधिपत्यं भुक्त्वा मृता सती

---

१ 'प्राक्तनः' B. २ 'स्थाप्यां(प्य ?)ते' A.B.
३ 'धवलक्कापुरम्' B. ४ 'तवा(दा ?)धिपत्यम्' B.

तत्रैव देशाधिष्ठात्री देवता[1] समजनि। सैकदा स्वप्ने वीर-धवलनृपस्याचीकथत्—यद्वस्तुपालतेजःपालौ राज्यचिन्तक-प्रायश्वरौ विधाय सुखेन राज्यं शाधि। इत्थं कृते राज्यराष्ट्रवृद्धि-स्तव भविचीत्यादिश्य स्वं च प्रकाश्य तिरोदधे देवी। प्रातरुत्थाय नृपतिर्वस्तुपालतेजःपालावाहूय सत्कृत्य च ज्यायसः स्तम्भ-तीर्थधवलक्कयोराधिपत्यमदात्। तेजःपालस्य तु सर्वराज्य-व्यापारमुद्रां ददौ। ततस्तौ षड्[2]दर्शनदाननानाविधधर्मस्थान-विधापनादिभिः सुकृतशतानि चिन्वन्तौ निन्यतुः समयम्।

तथा हि—लक्षमेकं सपादं जिनबिम्बानां कारितम्। अष्टादश कोटयः षण्णवतिर्लक्षाः श्रीशत्रुञ्जयतीर्थे द्रविणं व्ययितम्। द्वा[3]दश कोटयोऽशीतिर्लक्षा[4] श्रीउज्जयन्ते, द्वादशकोट्यस्त्रिपञ्चा-शत् लक्षा अर्बुदशिखरे लूणिगवसत्याम्। नवशतानि चतु-रशीतिश्च पौषधशालाः कारिताः, पञ्चशतानि दन्तमयसिंहा-सनानाम्, पञ्च[5]शतानि पञ्चोत्तराणि समवसरणानां जादरमया-नाम्। ब्रह्मशालाः सप्तशतानि, सप्तशतानि स[6]त्राकाा(गा)राणाम्,

---

१ 'जनकात् कञ्चुलिकापदे गुर्जरधरित्रीमवाप्य तदाधिपत्यं भुक्त्वा मृता सती तत्रैव देशाधिष्ठात्री देवता' इति A. पुस्तके लेखकप्रमादाद् द्विर्लिखितं वर्तते।

२ 'षट्(ड् ?)दर्शनदान' A.B.

३ 'द्वादशकोटयोऽशीतिर्लक्षाः श्रीउज्जयन्ते' इति A. पुस्तके नास्ति। ४ 'अशीतिल(र्ल ?)क्षाः' B.

५ 'पञ्चशतानि दन्त (?) पञ्चोत्तराणि' B.

६ 'सत्राकाा(गा ?)राणाम्' A.B.

सप्तशती तप[1]स्विकापालिकमठानाम्। सर्वेषां भोजननिर्वापादिदानं कृतम्। त्रिंशच्छतानि द्व्युत्तराणि माहेश्वरायतनानाम्, त्रयोदशशतानि चतुरुत्तराणि शिखरबद्धजैनप्रासादानाम्, त्रयो[2]विंशतिशतानि जीर्णचैत्योद्धाराणाम्। अष्टादशकोटिसुवर्णव्ययेन सर[3]स्वतीभाण्डागाराणां स्थानत्रये भरणं कृतम्। पञ्चशती ब्राह्मणानां नित्यं वेदपाठं करोति स्म। वर्षमध्ये संघपूजात्रितयम्। पञ्चदशशती श्रमणानां गृहे नित्यं विह[4]रति स्म। तटिककार्पटिकानां सहस्रं साधिकं प्रत्यहमभुङ्क्त। त्रयोदश तीर्थयात्राः संघपतीभूय कृताः। तत्र प्रथमयात्रायां चत्वारि सहस्राणि पञ्चशतानि शकटानां सशय्यापालकानां, सप्तशती सुखासनानां, [5]अष्टादशशती वाहिनीनां, एकान्नविंशतिः शतानि श्रीकरीणां, एकविंशतिः शतानि[6] श्वेताम्बराणाम्, एकादशशती दिगम्बराणां, चत्वारि शतानि सार्द्धानि जैनगायनानां, त्रयस्त्रिंशच्छती बन्दिजनानां, चतुरशीतिस्तडागाः सुबद्धाः, चतुःशती चतुःषष्ट्यधिका वापीनां, पाषाणमयानि त्रिंशद्वात्रिंशद्दुर्गाणि, दन्तमयजैनरथानां चतुर्विंशतिः, विंशं शतं शाक[7]घटितानां, स[8]रस्वतीकण्ठाभरणादीनि

---

१ 'तपस्वि(स्वि ?)' A.

२ 'त्रयोविंशतिः (ति ?)शतानि चैत्योद्धाराणाम्' B.

३ 'सरस्व(स्व ?)ती' A.

४ 'विहरं(र ?)ति' स्म B.

५ 'अष्टादशशता(ती ?)' A.

६ लेखकप्रमादात् A. पुस्तके 'वाहिनीनां। एकान्नविंशतिः शतानि श्रीकराणां। एकविंशति शतानि' इति द्विर्लिखितमास्ते।

७ 'शाकघटिकातातानां (तानरम् ?)' B.

८ 'सरस्वतीकण्ठाभरणानि' B.

चतुर्विंशतिर्विहाराणि श्रीवस्तुपालस्य । चतुःषष्टिर्मसीतयः कारिताः । दक्षिणस्यां **श्रीपर्वतं** यावत्, पश्चिमायां **प्रभासं** यावत्, [1]उत्तरस्यां **केदारं** यावत्, पूर्वस्यां **वाराण**[2]**सीं** यावत् तयोः कीर्तनानि । सर्वाग्रेण त्रीणि कोटिशतानि चतुर्दशलक्षा अष्टादश सहस्राणि अष्टशतानि लोष्ठिकचितयोनानि द्रव्यव्ययः । त्रिषष्टिवारान् संग्रामे जैत्रपत्रं गृहीतम् । अष्टादश वर्षाणि तयोर्व्यापृतिः ।

एवं तयोः पुण्यकृत्यानि कुर्वतोः[3] कियतापि कालेन **श्रीवीर-धवल**नृपः कालधर्ममयात्[4] । ततस्तत्पदे तदीयस्तनयः श्रीमान् **वीसलदेव**स्ताभ्यां मन्त्रिप्रवराभ्यां राज्येऽभिषिक्तः । सोऽपि समर्थः सन् क्रमेण दुर्मदः सचिवान्तरं विधाय मन्त्रितेजःपालमपा-चकार[5] । तदवलोक्य राज्ञः पुरोधाः **सोमेश्वर**नामा महाक[6]विर्नृपमुद्दिश्य साक्षेपं नव्यं काव्यम[7]पठत्—

यथा—

> मासान् मांसलपाटलापरिमलव्यालोलरोलम्बतः
> प्राप्य प्रौढिमिमां समीर महतीं पश्य त्वया यत् कृतम् ।
> सूर्याचन्द्रमसौ निरस्त[8]मसौ दूरं तिरस्कृत्य यत्
> पादस्पर्शसहं विहायसि रजः स्थाने तयोः स्थापितम् ॥

इत्यादि ।

---

१ 'उत्तरस्यां केदारं यावत्' इति B. पुस्तके नास्ति ।
२ 'वार(रा ?)णसीं' A, 'वाणारसीं' B.
३ 'कुर्वं(र्व)तोः' A.B.  ४ 'कालधर्ममवा(या ?)त्' A.B.
५ 'अपाचकारः(र ?)' B.  ६ 'महाकवि[:]' A.
७ 'काव्यं (व्य)मपठत्' A.  ८ 'निरस्त[त]मसौ'।

तयोः पुरुषरत्नयोर्वृत्तशेषमादित उत्पत्तिस्वरूपं च लोकप्रसिद्धित एवावगन्तव्यम् ।

गीताङ्गायनवर्येण स्वू[1]डा(त्वा ?)द्विज्ञाय कीर्तिता ।
कीर्तनानामियं संख्या श्रीमतो[2]र्मन्त्रिमुख्ययोः ॥

श्रीमहामात्यवस्तुपालतेजःपालकीर्तनसंख्याकल्पः[3] ।

यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ।
अर्हन्तश्च तयोश्चित्तमध्य[4]वात्सुरहर्निशम् ॥
तत्तीर्थरूपयोर्युक्त्या पुरुषश्रेष्ठयोस्तयोः ।
कीर्तनोत्कीर्तनेनापि न्याय्या[5] कल्पकृतिर्न किम् ॥
इत्यालोच्य हृदा कल्पलेशं मन्त्रीशयोस्तयोः ।
एतं विरचयांचक्रुः श्रीजिनप्रभसूरयः ॥

[ इति श्रीमहामात्यवस्तुपालतेजःपालकीर्तनसंख्याकल्पः । ]

[6]ग्रं. ५२ अ. ६ ॥

---

१ 'सूडाद्(त्वाद ?)' A.B.

२ 'श्रीमं(म)तोः' A.B.

३ अत्र B. पुस्तके 'ग्रंथ ५२ अ ५२' इति।

४ 'अध्यपौ(वा ?)त्सु' B.

५ 'त्या(न्या ?)य्या' A.

६ अत्र च B. पुस्तके 'ग्रंथ ४ अ० ६ ॥' इति।

श्री[1]पार्श्वं चेल्लणाभिख्यं ध्यात्वा श्रीवीरमप्यग्न ।
कल्पं श्रीढिंपु[2]रीतीर्थस्याभिधास्ये यथाश्रुतम् ॥ १ ॥
पारेतजनपदान्तश्चर्मण्वत्यास्तटे महानद्याः ।
नानाघनवनवहना जयत्यसौ ढिंपुरीति पुरी ॥ २ ॥

अत्रैव भारते वर्षे विमलयशा नाम भूपतिरभूत् । तस्य सुमङ्गलादेव्या सह विषय[3]सुखमनुभवतः क्रमाज्जातमपत्ययुगलम् । तत्र पुत्रः पु[4]ष्पचूलः पुष्पचूला पुत्री । अनर्थसार्थमुत्पादय[5]तः पुष्पचूलस्य कृतं लोकैर्वङ्कचूल इति नाम । महाजनोप(पा ?)लम्भेन राज्ञा रुषितेन[6] निस्सारितो नगराद्वङ्कचूलः । गच्छंश्च पतितो भीषणायामटव्यां सह निजपरिजनेन स्वस्रा च स्नेहवशया । तत्र च क्षुत्पिपासार्दितो दृष्टो भिल्लैः । नीतः स्वपल्लीं स्थापितश्च पूर्वपल्लीपतिपदे पर्यपाल[7]यद्राज्यम्, अलुण्ठयद्ग्रामनगरसार्थादीन् ।

अन्यदा सुस्थिताचार्या अर्बुदाचलादष्टापदयात्रायै प्रस्थितास्तामेव सिंहगुहां नाम पल्लीं सगच्छाः प्रापुः । जातश्च वर्षाकालः । अजनि च पृथ्वी जीवाकुला । साधुभिः सहालोच्य मार्गयित्वा वङ्कचूलाद्वसतिं स्थितास्तत्रैव सूरयः । तेन च प्रथममेव व्यवस्था कृता—‘मम सीमान्तर्धर्मकथा न कथनीया । यतो

---

१ ‘श्रीपार्श्व(र्श्वं ?)चेल्लणाभिख्यं’ B.
२ ‘ढिंपुर(री ?)तीर्थस्य’ B. ३ ‘विषयसुखम्,’ A.B.
४ ‘पुत्रः [पुष्पचूलः पुत्री]पुष्पचूला’ A.
५ ‘उत्पादयत्(तः ?)’ A. ६ ‘पु(?)रुषितेन’ A.
७ ‘[पर्य ?]पालयद्राज्यम्’ B.

युष्मत्कथायामहिंसादिको धर्मः। न चैवं मल्लोको निर्वहति।' एवमस्तु इति प्रतिपद्य तस्थुरुपाश्रये गुरवः। तेन चाहूय सर्वे प्रधानपुरुषा भणिताः—अत्र राजपुत्रस्तत्समीपे ब्राह्मणादय आगमिष्यन्ति[1] ततो भवद्भिर्जीववा(व?)धो[2] मांसमद्यादिप्रसङ्गश्च पल्ल्या[3] मध्ये न कर्तव्यः। एवं कृते यति(ती?)नाम[पि?] भक्तपानमजुगुप्सितं कल्पेत[4] इति। तैस्तथैव कृतं यावच्चतुरो मासान्। प्राप्तो विहारसमयः। अनुज्ञापितो वङ्कचूलः सूरिभिः 'समणाणं सउणाणम्, इत्यादिवाक्यैः। ततस्तैः सह चलितो, वङ्कचूलः। स्वसीमां प्राप्नुषा तेन विज्ञप्तं—[5]वयं परकीयसीमायां न प्रविशाम इति। भणितः सूरिभिः—वयं सीमान्तरमुपेताः तत्किमप्युपदिशाम-स्तुभ्यम्। तेनोक्तं—यन्मयि निर्वहति तदुपदेशेनाऽनुगृह्यतामयं जनः। ततः सूरिभिश्चत्वारो नियमा दत्ताः तद्यथा—अज्ञातफलानि न भोक्तव्यानि, सप्ताष्टानि पदान्यपसृत्य घातो देयः, पट्टदेवी नाऽभिगन्तव्या, काकमांसं च न भक्षणीयमिति। प्रतिपन्नास्तेन ते। गुरून् प्रणम्य स स्वगृहानागमत्।

अन्यदा गतं सार्थस्योपरि धाट्या। शकुनकारणान्नागतः सार्थः। त्रुटितं[6] च तस्य पथ्यदनम्। पीडिताः क्षुधा राजन्याः। दृष्टश्च तैः किंपाकतरुः फलितः। गृहीतानि फलानि। न जानन्ति ते तन्नामधेयमिति तेन न भुक्तानि। इतरैः सर्वैर्बुभुजिरे। मृताश्च

---

१ 'आगमिष्यति(न्ति?)' A. २ 'जीववधो' A.B.
३ 'पल्या (ल्ल्या?)' A.B.
४ 'काल्पत इति' A. 'कल्पित इति' B.
५ 'विज्ञप्ति(प्तं?)' A.B. ६ 'त्रुटिटं (तं?)' A.B.

तैः किंपाकफलैः । ततश्चिन्तितं तेनाहो ! नियमानां[1] फलम् । ततं एकाक्येवागतः पल्लीम्, रजन्यां प्रविष्टः[2] स्वगृहम् । दृ[3]ष्ट्वा **पुष्पचूला** दीपालोकेन पुरुषवेषा निजपत्न्या सह प्रसुप्ता । जातस्तस्य कोपस्तयोरुपरि । द्वावप्येतौ खड्गप्रहारेण छिनद्मीति यावदचिन्तयत्तावत्स्मृतो नियमः । ततः सप्ताष्टपदान्यपक्रम्य घातं ददत् खाट्कृतमुपरि खड्गेन । व्याहृतं स्वस्रा 'जीवतु **वङ्कचूल**' इति । तद्वचः श्रुत्वा लज्जितोऽसावपृच्छत्किमेत[4]दिति । सापि नटवृत्तान्तमचीकथत् ।

कालक्रमेण तस्य तद्राज्यं शासतस्तत्रैव पल्ल्यां तस्यैवाचार्यस्य शिष्यौ **धर्मऋषिधर्मदत्तनामानौ** कदाचिद्वर्षारात्रमवास्थिषाताम् । तत्र तयोरेकः साधुस्त्रिमासक्षपणं विदधे । द्विती[5]यश्चतुर्मासक्षपणम् । **वङ्कचूलस्तु** तद्दत्तनियमानामायतिशुभफलता-

---

१ 'निगृह्णीयमानां (नियमानां ?)' B.

२ 'प्रविष्ट[:]' B. ३ 'दृष्ट्वा(ष्ट्वा ?)' A.

४ 'अत्र B. पुस्तके लेखकप्रमादात् सप्तचत्वारिंशस्य पत्रस्यारम्भे षट्चत्वारिंशत्तमपत्रारम्भस्था इमाः पङ्क्तयः पूर्वकल्पस्था लिखिताः—'[शिखर-] बद्धजैनप्रासादानां । त्रयोविंशतानि चैत्योद्धाराणां । अष्टादशकोटिसुवर्णव्ययेन सरस्वतीभाण्डागाराणां स्थानत्रये भरणं कृतम् । पञ्चशती ब्राह्मणानां नित्यं वेदपाठं करोति स्म । वर्षमध्ये संघपूजात्रितयं पञ्चदशशती श्रमणानां गृहे नित्यं विहरं(र)ति स्म । तटिककार्पटिकानां सहस्रं साधिकं प्रत्यहमभुङ्क्त । त्रयोदश तीर्थयात्राः संघपतीभूय कृताः । तत्र प्रथमयात्रायां चत्वारि—'।

५ 'द्वितीयच(श्च ?)तुर्मासक्षपणम्' A.

मवलोक्य व्यजिज्ञपत्। भदन्तौ! मदनुकम्पया कमपि पेशलं धर्मोपदेशं दत्तम्। ततस्ताभ्यां चैत्यविधापनदेशना क्लेशनाशिनी विदधे। तेनापि शरावतिकापर्वतसमीपवर्त्तिन्यां तस्यामेव [1]पल्ल्यां चर्मणवती[2]सरित्तीरे कारितमुच्चैस्तरं चारुचैत्यं, स्थापितं तत्र श्रीमन्महावीरबिम्बम्। तीर्थतया च रूढं तत्। तत्र यान्ति स्म चतुर्दिग्भ्यः संघाः।

कालान्तरे कश्चिन्नैगमः सभार्यः सर्वज्ञा तद्यात्रायै प्रस्थितः। प्राप्तः क्रमेण रन्तिनदीम्। नावा[3](व ?)मारूढौ च दम्पती चैत्यशिखरं व्या(व्य ?)[4]लोकयताम्। ततः सरभसं सौवर्णकच्चोलके कुङ्कुमचन्दन[5]कर्पूरं प्रक्षिप्य जलं[6] चेप्तुमारब्धवती नैगमगृहिणी। प्रमादान्निपतितं तदन्तर्जल[7]तलम्। (तं० ?) ततो भणितं वणिजा अहो! इदं कच्चोलकं (तं०?) नैककोटिमूल्यरत्नखचितं राज्ञा ग्रहणकेऽर्पितमासीत्। ततो राज्ञः कथं कुटितव्यमिति। चिरं विषद्य वङ्कचूलस्य पल्लीपतेर्विज्ञापितं तत्। यथास्य राजकीयवस्तुनो विचितिः कार्यताम्। तेनापि धीवर आदिष्टस्तच्छो[8]धयितुं प्राविशदन्तर्नदम्। विचिन्वता चान्तर्जलतलं दृष्टम्! दृष्टं तेन हिर[9]ण्मयरथस्थं जीवन्तस्वामिश्रीपार्श्वनाथ[10]बिम्बम्। यावत्

१ 'पल्ल्यां(ल्ल्यां)' B. २ 'चर्मन्य(ण्व ?)ती' A. B.
३ 'नावा(व ?)म्' A. B. ४ 'व्य(व्या ?)लोकयताम्' A.
५ 'कर्प्पूरं' A., 'कर्पूरं' B. ६ 'जले' B.
७ 'अन्तर्जलतलं तं(लं त ?)' A., 'निपतितं [त ?]दंतर्जलतं(त)लं तं(लं। त)' B. ८ 'तच्छो(च्छो ?)धयितुम्' B.
९ 'हरि(हिर ?)ण्मय' A. B. १० 'श्रीपार्श्वनाथबिम्ब[म्]' B.

पश्यति स्म स बिम्बस्य हृदये तल्कचोलकम् । धीवरेणोक्तं—धन्याविमौ दम्पती यद्भगवतो वक्षसि घुसृणचन्द्रचन्दनविलेपनार्हं स्थितमिदम् । ततो गृहीत्वा तदर्पितं नैगमस्य । तेनापि दत्तं तस्मै बहु द्रव्यम् । उक्तं च बिम्बस्वरूपं नाविकेन । ततो वङ्कचूलेन श्रद्धालुना तत्रैव प्रवेश्य निष्कासितं तद्बिम्बम् । कनकरथस्तु तत्रैव मुक्तः । निवेदितं हि स्वप्ने प्राग्भगवता नृपतेः, यत्र[1] क्षिप्ता सती पुष्पमाला गत्वा तिष्ठति तत्र बिम्बं शोध्यमिति । तदनुसारेण बिम्बमानीय समर्पितं राज्ञे वङ्कचूलाय । तेनापि स्थापितं श्रीवीरबिम्बस्य बहिर्मण्डपे यावत्किल नव्यं चैत्यमस्मै कारयामीत्यभिसन्धिमता । कारिते च चैत्यान्तरे यावत्तत्र स्थापनार्थमुत्थापयितुमार[2]भन्ते राज-कीयाः पुरुषास्तावत्तद्बिम्बं नोत्तिष्ठति स्म । देवताधिष्ठानात्तत्रैव स्थितमद्यापि तत्रै(थै ?)वास्ते । धीवरेण पुनर्विज्ञप्तः पल्लीपतिः—यत्तत्र देव ! मया नद्यां प्रति(वि ?)ष्टेन[3] बिम्बान्तरमपि दृष्टम्, तदपि बहिरानेतुमौचितीमञ्चति । पूजारूढं हि भवति । ततः पल्लीश्वरेण पृष्टा स्वपरिषत् । भो ! जानीते कोऽप्यनयोर्बिम्बयोः संविधानकं केन खल्वेते नद्या[4](द्य ?)न्तर्जलतले न्यस्ते इत्या-कर्ण्यैकेन पुराविदा स्थविरेण विज्ञप्तम्—देव ! एकस्मिन्नगरे पूर्वं[5] नृपतिरासीत् । स च परचक्रेण समुपेयुषा सार्द्धं योद्धुं सकल-चमूसमूहसन्नहनेन गतः, तस्याग्रमहिषी च निजं सर्वस्वमेतच्च बिम्बद्वयं कनकरथस्थं विधाय जलदुर्गमिति कृत्वा चर्मण्वत्यां

---

१ 'यस्मात्र [यत्र ?] क्षिप्ता सती(ती ?)' B.

२ 'आरभन्ते(न्त ?)' A. ३ 'प्रति(वि ?)ष्टेन' A. B.

४ 'नद्या(द्य ?)न्तर्जले' B. ५ 'पूर्वं नृपतिरासीत्' B.

कोटिम्बके प्रक्षिप्य स्थिता[1]। चिरं युद्ध्यतस्तस्य कोऽपि खलः किल वार्तामानैषीत्—यदयं नृपतिस्तेन परचक्राधिपतिनृपतिना व्यापादित इति। तत् श्रुत्वा देवी तत्कोटिम्बकमाक्रम्यान्तर्जलतलं प्राक्षिपत्, स्वयं च परासुतामासदत्। स च नृपतिः परचक्रं निर्जित्य यावन्निजनगरमागमत्तावद्देव्याः प्राचीनं वृत्तमाकर्ण्य भवाद्विरक्तः पारमेश्वरीं दीक्षां कक्षीचक्रे। तत्रैकं बिम्बं देवेन बहिरानीतं पूज्यमानं चास्ति। द्वितीयमपि चेन्निःसरति तदोपक्रम्यतामिति। तदाकर्ण्य वङ्कचूलः परमार्हत[2]चूला(डा ?)मणिस्तमेव धीवरं[3] तदानयनाय नद्यां प्रावीविशत्। स च तद्बिम्बं कटीदघ्न[4]वपुर्जल-तलेऽवतिष्ठमानं बहि[:]स्थशेषाङ्गं चावलोक्य निष्कासनो[5]पायाननेकानकार्षीत्। न च तन्निर्गतमिति दैवतप्रभावमाकलय्य समागत्य च विशामीशाय न्यवेदयत्तत्स्वरूपम्। अद्यापि तत् किल तथैवास्ते। श्रूयतेऽद्यापि केनापि धीवरस्थविरेण नौकास्तम्भे जाते तत्कारणं विचिन्वता तस्य हिरण्मयरथस्य कीलिका लब्धा। तां कनकमयीं दृष्ट्वा लुब्धेन तेन व्यचिन्ति—यदिमं रथं क्रमात्सर्वं गृहीत्वा ऋद्धिमान् भविष्यामीति। ततश्च स रात्रौ निद्रां न लेभे। उक्तश्च केनाप्यदृष्ट-पुरुषेण—यदिमां तत्रैव विमुच्य[6] सुखं स्वेयाः, नो चेत्तव एव त्वां हनिष्यामीति। तेन भयार्तेन तत्रैव मुक्ता युगकीलिका इत्यादि। किं न संभाव्यते दैवताधिष्ठितेषु पदार्थेषु।

---

१ 'स्थितारा(स्थिता ?)सीत्' B. २ 'परमार्हतः' B.
३ 'धी[व ?]रं' B. ४ 'दग्ध(घ्न ?)' A.
५ 'निष्कासनोपायाननेका[न ?]कार्षीत्' B.
६ 'विमुच्य [सुखं ?] स्थेयाः' B.

श्रूयते च संप्रति काले कश्चित् म्लेच्छः पाषाणपाणिः श्रीपार्श्वनाथप्रतिमां भङ्क्तुमुपस्थितः स्तम्भितबाहुर्जातः, महति[1] पूजाविधौ कृते सज्जतामापन्न इति। श्रीवीरबिम्बं महत् तदपेक्षया लघीयस्तरं श्रीपार्श्वनाथबिम्बमिति महावीरस्यार्भकरूपोऽयं देव इति मेदाश्चेल्लण इत्याख्यां प्राचीकशत्(न् ?)[2]। श्रीमच्चेल्लणदेवस्य महीयस्तममाहात्म्यनिधेः पुरस्ताभ्यां महर्षिभ्यां सुवर्णमुकुटमन्त्राम्नायः समा[रा ?]धितः प्रकाशितश्च भव्येभ्यः। सा च सिंहगुहापल्ली कालक्रमाद्धिंपुरीत्याख्यया प्रसिद्धा नगरी संजाता। अद्यापि स भगवान् श्रीमहावीरः, स [च?] चेल्लण[3]पार्श्वनाथः सकलसंघेन तस्यामेव पुर्यां यात्रोत्सवैरारा[4]ध्यते इति।

अन्यदा वङ्कचूल उज्जयिन्यां खात्रपातनाय चौर्यवृत्त्या कस्यापि श्रेष्ठिनः सद्मनि गतः। कोलाहलं श्रुत्वा वलितः। ततो देवदत्ताया गणिकाया गणिक्यमाणिक्यभूताया गृहं प्राविशत्। दृष्टा सा कुष्ठिना सह प्रसुप्ता। ततो निःसृत्य गतः पुरः श्रेष्ठि(ष्ठि ?)नो वेश्म। तत्रैकविंशोपको लेख्यके त्रुट्यतीति परुष[5]वाग्भिर्निर्भर्त्स्य निःसारितो गेहात् पुत्रः श्रेष्ठि(ष्ठा ?)ना। विरराम च यामिनी। यावद्राजकुलं यामीत्यचिन्तयत् तावदुज्जगाम धामनिधिः। पल्लीशश्च निःसृत्य नगराद्गोधां गृहीत्वा तरुतले दिनं नीत्वा [6]पुना रात्रावागाद्राजभाण्डागाराद्बहिर्गोधापुच्छे[7] विलग्य प्राविशत्कोशम्।

---

१ 'मह[ति ?] पूजाविधौ' A. २ 'प्राचीकशत्(न् ?)' A.
'प्राचीकशन्' B.
३ 'स चेल्लणपार्श्वनाथ[:]' B.
४ 'आराध्ये(ध्य)ते' A. B. ५ 'पु(प ?)रुषवाग्भिः' B.
६ 'पुन (ना ?) रात्रा' A. B. ७ 'पुच्छे(च्छे ?)' B.

दृष्टो राजाग्रमहिष्या दृष्ट्वा पृष्टश्च कस्त्वमिति। तेनोक्ते चौर इति। तयोक्तं—मा भैषीः मया सह संगमं कुरु। सोऽवादीत् का त्वं? साप्यूचेऽग्रमहिष्यहमिति। चौरोऽवादीद्यद्येवं तर्हि ममाम्बा भवसि अतो यामीति निश्चिते तया स्वाङ्गं नखैर्विदार्य पूत्कृति-पूर्वमाहूता आरक्षकाः। गृहीतस्तैः। राज्ञा चानुनयार्थमागतेन तद्दृष्टम्। राज्ञोक्ताः स्वपौ[१](पु?)रुषाः मैनं गाढं [२]कुर्वीध्वमिति। तै रक्षितः। प्रातः पृष्टः क्षितिभृता। तेनाप्युक्तं—देव! चौर्यायाहं प्रविष्टः पश्चाद्देवभाण्डागारे देव्या दृष्टोऽस्मि। यावदन्यन्न कथयति तावत्तुष्टो विदितवेद्यो नरेन्द्रः। स्वीकृतः[३] पुत्रतया, स्थापितश्च सामन्तपदे। देवी च विडम्ब्यमाना रक्षिता वङ्कचूलेन। अहो! नियमानां शुभफलमित्यनवरतमयमध्यासीत्। प्रेषितश्चान्यदा राज्ञा [४]कामरूपभूपसाधनार्थम्। गतो युद्धे घातैर्जर्जरितो विजित्य तमागमत् स्वस्थानम्। व्याहृता च राज्ञा वैद्याः यावद्रू[५]ढोऽपि घातव्रणो विकसति। तैरुक्तं देव! काकमांसेन शोभनो भवत्ययम्। तस्य च जिनदासश्रावकेण सार्द्धं प्रागेव मैत्र्यमासीत्। ततस्तदानयनाय प्रेषितः पुरुषः पुरुषाधिपतिना, येन तद्वाक्यात्काक-मांसं भक्षयतीति। तदाहूतश्च जिनदासोऽवन्तीमागच्छन्शुभे दिव्ये सुदत्यौ[६] रुदत्यावद्राक्षीत्। तेन पृष्टे—किं रुदिथः ताभ्या-मुक्तमस्माकं [७]भर्ता सौधर्माच्यु(च्यो?)तः। अतो राजपुत्रं वङ्कचूलं

---

१ 'स्वपौ(पु?)रुषाः' 'स्व(स्व?)पौ(पु?)रुषाः' B.

२ 'कुर्व्वीध्वम्' A. B. ३ 'स्वीकृत[ः]' B.

४ 'काम...पभूपसाधनार्थम्' B. ५ 'यावद्रूढो(ढो?)पि' B.

६ 'सुदन्त्यौ(त्यौ?)' A. ७ 'भक्ता(र्ता?)सौ धर्म्माच्यु(च्यु?)तः' B.

प्रार्थयावहे । परं त्वयि गते स [1]मांसं भक्षयिता [2]ततो गन्ता दुर्गतिम् । तेन [2]रुदिवः । तेनोक्तं—तथा करिष्ये यथा तन्न भक्षयिता । गतस्य तत्र राजोपरोधाद्वङ्कचूलमवोचत् । गृहाण बलिभुक्पिशितम् । पटूभूतः सन् प्रायश्चित्तं [3]चरेः । वङ्क-चूलोऽवोचत्—जानासि त्वं यदा[4]चर्याप्यकार्यं प्रायश्चित्तं ग्राह्यम् । ततः प्रागेव तदनाचरणं श्रेयं इति "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति वाक्यात्; निषिद्धो नृपतिः । विशेष-प्रतिपन्नव्रतनिवहश्चाच्युतकल्पमगमत् । वल[5]मानेन जिनदासेन ते देव्यौ तथैव रुदत्यौ दृष्ट्वा प्रोक्तं—किमिति रुदिथः । न तावत् स [6]मा(मां)सं ग्राहितः । ताभ्यामभिदधे—स ह्यधिकाराधनावशादच्युतं प्राप्तस्ततो नाभवदस्मद्भर्तेति । एवं जिनधर्मप्रभावं सुचिरं परिभाव्य जिनदासः स्वावासमाससादेति । एवं चास्य तीर्थस्य निर्मापयिता वङ्कचूल एवाजनि जनित[7]जगदानन्दः ।

ढिंपुरीतीर्थरत्नस्य कल्पमेतं यथाश्रुतम् ।
किंचिद्विरचयांचक्रुः श्रीजिनप्रभ[8]सूरयः ॥

[9]इति श्रीचेल्लणपार्श्वनाथस्य कल्पः ॥
ग्रं. ११६ अ. २६ ॥

---

१ 'मांस(सं ?)' B. २ 'रुदिव[:]' A. B.
३ 'चरे[:]' A. ४ 'यदाचा(च ?)र्याप्यकार्यं' B.
५ 'व(व ?)लमानेन' A. B. ६ 'मा(मां ?)सं' A.
७ 'जनितजगदानन्द[:]' B. ८ 'सूरिभियः(सूरयः ?)' B.
९ 'इति श्रीचेल्लणपार्श्वनाथकल्पः' B.

## ढिंपुरीस्तवस्तयम् ।

उत्तुङ्गैर्विविधैर्नगैरुपलसच्छायैरभिभ्राजिता
  श्रीवीरप्रभुपार्श्वसुव्रतयुगादीशादि[1]बिम्बैर्युता ।
पल्ली भूतलविश्रुता नियमिनः श्रीवङ्कचूलस्य या
  सा भूत्या चिरमद्भुतां कलयतु प्रौढिं पुरी ढिंपुरी ॥१॥

व्योमचुम्बिशिखरं मनोहरं
  रन्तिदेवतटिनीतटस्थितम् ।
अत्र चैत्यमवलोक्य यात्रिकाः
  शैत्यमाशु ददति स्वचक्षुषोः ॥ २ ॥

मूलनायक इहान्त्यजिनेन्द्र-
  श्चारुलेपघटितोद्भट[2]मूर्तिः ।
दक्षिणे जयति चेल्लणपार्श्वो
  भात्युदक् तदपरः फणिकेतुः ॥ ३ ॥

एकत आदिजिनो वृजिनो-
  ऽन्यत्र पुनर्मुनिसुव्रतनाथः ।
एवमनेकजिनेश्वरमूर्तिः
  स्फूर्त्ति[3]मदत्र चकास्ति जिनौकः ॥ ४ ॥

अत्राम्बिका द्वारसमीपवर्तिनी
  श्रीक्षेत्रपालो भुजषट्कभास्वरः ।
सर्वज्ञ[4]पादाम्बुजसेव[5]नाऽऽलिनौ
  संघस्य विघ्नौघमपोहतः क्षणात् ॥ ५ ॥

---

१ 'बिम्बैयु(र्यु ?)ता' B.     २ 'घटितोद्भव(ट ?)' B.
३ 'स्फूर्त्तिमदभ्र(त्र ?)' A. B.     ४ 'सर्वज्ञप(पा ?)दाम्बुज' A.
५ 'केभ्रनालिनौ' B.

याश्चोत्सवानिह क्षितौ सहसो दशम्या-
  मालोक्य लोकसमवायविधीयमानान् ।
संभावयन्ति भविकाः कलिकाल[1]गेहे
  प्राघूर्णकं कृतयुगं ध्रुवमभ्युपेतम् ॥ ६ ॥
अमरमहितमेतत्तीर्थमाराध्य भक्त्या
  फलितसकलकामाः सर्वभीतीर्जयन्ति ।
बहलपरिमलाढ्यं चन्दनं प्राप्य यद्वा
  क इव सहतु तापव्याप[2]मालिङ्गिताङ्गम् ॥ ७ ॥
वन्द्या नन्द्यादघहतिदृढा ढिंपुरीतीर्थरत्नं
  यामध्यास्ते सुरतरुरिव प्रार्थितार्थप्रदायी ।
पद्मावत्या भुजगपतिनाचाऽविमुक्तांह्रि(ङ्घ्रि ?)पार्श्वः
  कायोत्सर्गस्थितवपुरयं चेल्लणः पार्श्वनाथः ॥ ८ ॥
[3]शशधरऋषीकाऽचित्तोणीमिते (१२५१) शकवत्सरे
  ग्टहमणिमहे [4]संघान् वीता उपेत्य पुरीमिमाम् ।
मुदितमनसस्तीर्थस्यास्य प्रभावमहोदधि(धे ?)-
  रिति विरचयांचक्रुः[5] स्तोत्रं जिन[6]प्रभसूरयः ॥ ९ ॥

[इति ?] ढिं[7]पुरीस्तोत्रम् ॥ ग्रं. १६ ॥

---

१ 'कलिकालमे(गे ?)हे' B.
२ 'तापव्यापमालिङ्गिताङ्ग[म्]' B.
३ 'शश[धर ?]ह(ऋ ?)षीकाचित्तोणीमिते' B.
४ 'संघान्वतीत्ता(न्वीत्ता ?)' B.
५ 'चक्रु[:]' A. B.
६ 'जिनप्रभ प्रभ(?)सूरयः' B.
७ 'ढिपुरीस्तोत्रं' A. B.

पर्युपास्य परमेष्ठि[1]पञ्चकं कीर्त्तयामि हृतपापनिग्रहम्।
तत्त्ववेदिविदितं चतुरशीतितीर्थजिननामसंग्रहम्॥ १ ॥

तथाहि—

श्रीशत्रुञ्जये भुवनदीपः श्रीवैर(वज्र ?)स्वा[2]मिप्रति[3]ष्ठितः पूर्णकल[4]शः ॥

तथा—

श्रीमूलनायकः पाण्डवस्थापितो नन्दिवर्द्धनयुगादिनाथः ॥

श्रीशान्तिप्रतिष्ठितः[5] पुण्डरीकः श्रीकलशः, द्वितीयस्तु श्रीवैर(वज्र ?)स्वा[6]मिप्रति[7]ष्ठितः पूर्णकलशः ॥

सुधाकुण्डजीवितस्वामी श्रीशान्तिनाथः ॥

मरुदेवास्वामिनी प्रथमसिद्धः ॥

श्रीउज्जयन्ते पुण्यकलशमदनमूर्[8]त्ति[: ?]श्रीनेमिनाथः काञ्चनबलानके अमृत[9]निधि[: ?]श्रीअरिष्टनेमिः ॥

पापामठे अतीतचतुर्विंशतिमध्यात् अष्टौ पुण्यनिधयः श्रीनेमीश्वरादयः ॥

काशहृदे त्रिभुवनमङ्गलकलशः श्रीआदिनाथः ॥

---

१ 'परमेष्ठि(ष्ठि ?)' A. B. २ 'श्रीवैरस्वाभि' A. B.
३ 'प्रतिष्ठि(ष्ठि)तः' A. B.
४ 'मूर्णकलशः' T. 'श्रीआदिनाथः' A.
५ 'प्रतिष्ठिष्ठितः(?)' A. ६ 'श्रीवैरस्वामि' A. B.
७ 'प्रतिष्ठि(ष्ठि ?)तः' A. B. ८ 'मदनमूर्त्तिः' A. B.
९ 'अमृतनिधिः' A. B.

गार[1]करदेशे श्रीआदिनाथः। अयोध्यायां श्री[2]ऋषभदेवः। कोल्लापुरे वज्रमृत्तिकामयः श्रीभरतेश्वरपूजितो भुवनतिलकः श्रीआदिनाथः।

सोपारके जीवन्तस्वामिश्रीऋषभदेवप्रतिमा ॥

नगरमहास्थाने श्रीभरतेश्वरकारितः श्रीयुगादिदेवः ॥

दक्षिणापथे गोमटदेवः श्रीबाहुबलिः ॥

उत्तरापथे कलिङ्गदेशे गोमटः श्रीऋषभः ॥

खंगार[3]गढे श्रीउग्रसेनपूजितो मेदिनीमुकुटः श्रीआदिनाथः ॥

महानगर्यामुद्दण्डविहारे श्रीआदिनाथः ॥

पुरिमताले श्रीआदिनाथः ॥

तक्षशिलायां बाहुबलिविनिर्मितं धर्मचक्रम् ॥

मोक्षतीर्थे श्रीआदिनाथपादुका ॥

कोल(ल्ल ?)पाकपत्तने माणिक्यदेवः श्रीऋषभो मन्दोदरीदेवतावसरः ॥

गङ्गायमुनयोर्वेणीसंगमे श्रीआदिक[र ?]मण्डलम् ॥

श्रीअयोध्यायां श्रीअजितस्वा[4]मी ॥

चन्द(न्दे ?)र्याम्[5] अजितः ॥

तारणे विश्वकोटिशिलायां श्रीअजितः ॥

---

१ 'गारकरदेशे' इत्यारभ्य 'भुवनतिलक, श्रीआदिनाथः' इत्यन्तं A. पुस्तके पाठो नास्ति।

२ 'ऋषभदेवः' B.

३ 'खंगारगटे(ढे ?)' B.

४ 'अजितस्वामी' B.

५ 'चन्देर्याम्' A. B.

अंगदिक्कायां श्रीअजितस्वा[1]मि-
शान्तिदेवताद्वयं श्रीब्रह्मेन्द्रदेवतावसरः ॥
श्रावस्त्यां श्रीसंभवदेवो जाङ्गुलीविद्याधिपतिः ॥
सेगमतीग्रामे श्रीअभिनन्दनदेवः ।
नर्मदा तत्पादेभ्यो निर्गता ॥
क्रौञ्चद्वीपे सिंहलद्वीपे हंसद्वीपे श्रीसुमतिनाथ-
देव[2]पादुकाः ॥
आम्बुरिणिग्रामे श्रीसुमतिदेवः ॥
माहेन्द्रपर्वते[3] कौशाम्ब्यां च श्रीपद्मप्रभः[4] ॥
मथुरायां महालक्ष्मीनिर्मितः श्रीसुपार्श्वस्तूपः ॥
श्रीदशपुरनगरे श्रीसुपार्श्वः श्रीसीता[5]देवी देवतावसरः ॥
प्रभासे शशीभूषणः श्रीचन्द्रप्रभश्चन्द्रकान्तमणिमयः श्री-
ज्वालामालिनीदेवतावसरः ॥
श्रीगौतमस्वामिप्रतिष्ठितो[6] वलभ्यागतः श्रीनन्दिवर्द्धन-
कारितः श्रीचन्द्रप्रभः ॥
नासिक्यपुरे श्रीजीवितस्वामी त्रिभुवनतिलकः श्री-
चन्द्रप्रभः ॥
चन्द्रावत्यां मन्दिरमुकुटः श्रीचन्द्रप्रभः ॥
वाराणस्यां विश्वेश्वरमध्ये श्रीचन्द्रप्रभः ॥
कायाद्वारे श्रीसुविधिनाथः ॥

---

१ 'अजित[स्वामि]शान्ति' B. २ 'देवपादुका' B.
३ 'माहेन्द्रपव(र्व ?)ते' B. ४ 'श्रीपद्म प्रभु(भः ?)' B.
५ 'सीतादेवी' A. B. ६ 'प्रतिष्टि(ष्ठि ?)तो' A. B.

प्रयागतीर्थे श्रीशीतलनाथः ॥

विन्ध्याद्रौ मलयगिरौ च श्रीश्रेयांसः ॥

चम्पायां विश्वतिलकः श्रीवासुपूज्यः ॥

काम्पील्ये गङ्गामूले सिंहपुरे च श्रीविमलनाथः ॥

मथुरायां यमुना[1]ह्रदे(दे ?) समुद्रे द्वा(द्वा ?)रावत्या शाकपाणिमध्ये श्रीअनन्तः ॥

अयोध्यासमीपे रत्नवाहपुरे नागमहितः श्रीधर्मनाथः ॥

किष्किन्धायां लङ्कायां त्रिकूटगिरौ श्रीशान्तिनाथः ॥

गङ्गायमुनयोर्वेणीसङ्गमे श्रीकुन्थ(न्थु ?)नाथारनाथौ ॥

श्रीपर्वते मल्लिनाथः ॥

भृगुपत्तने अनर्घरत्नचूडः श्रीमुनिसुव्रतः ॥

प्रतिष्ठानपुरे[2] अयोध्यायां विन्ध्याचले माणिक्यदण्डके मुनिसुव्रतः ॥

अयोध्यायां मोक्ष[3]तीर्थे नमिः ॥

शौर्यपुरे शङ्खजिनालये पाटलानगरे मथुरायां द्वारकायां सिंहपुरे स्तम्भतीर्थे पातालिङ्गाभिधः श्रीनेमिनाथः ॥

अजागृहे नवनिधिः श्रीपार्श्वनाथः ॥ [१ ॥]

स्तम्भनके भवभयहरः ॥ २ ॥

फलवर्द्धिकायां विश्वकल्पलताभिधः ॥ ३ ॥

करहेटके उपसर्गहरः ॥ ४ ॥

---

१ 'यमुनाह्रदे(दे ?)' A. B. २ 'प्रतिष्ठा(ष्ठा ?)नपुरे' A. B.

३ 'मोक्षतीर्थनमिः' B.

अहिच्छत्रायां[1] त्रिभुवनभानुः ॥ ५ ॥
कलिकुण्डे नाग[2]ह्रदे च श्रीपार्श्वनाथः ॥ ६ ॥
कुक्कुटेश्वरे विश्वगजः ॥ ७ ॥
माहेन्द्रपर्वते छायापार्श्वनाथः ॥ ८ ॥
त्रे(ओं ?)कारपर्वते सहस्रफणी पार्श्वनाथः ॥ ९ ॥
वाराणस्यां दण्डखाते भव्यपुष्करावर्त्तकः ॥ १० ॥
महाकालान्तरे पातालचक्रवर्त्ती ॥ ११ ॥
मथुरायां कल्पद्रुमः ॥ १२ ॥
चम्पायामशोकः ॥ १३ ॥
मलयगिरौ श्रीपार्श्वनाथः ॥ १४ ॥
श्रीपर्वते घण्टाकर्णमहावीरः ॥ १५ ॥
विन्ध्याद्रौ श्रीगुप्तः ॥ १६ ॥
हिमाचले छायापार्श्वो[3] मन्त्राधिराज[4]श्रीस्फुलिङ्गः ॥ १७ ॥
श्रीपुरे अन्तरिक्षः श्रीपार्श्वः ॥ १८ ॥
डाकुलीभीमेश्वरे श्रीपार्श्वनाथः ॥ १९ ॥
भायल[5](लया ?)स्वामिगढे देवाधिदेवः ॥ २० ॥
श्रीरामशयने प्रद्योतकारिश्रीवर्द्धमानः ॥ २१ ॥

मोढेरे वायडे नाणके पल्ल्यां [6]मतुण्डके मुण्डस्थले श्रीमालपत्तने उपकेशपुरे कुण्डग्रामे सत्यपुरे टङ्कायां

---

१ 'अहिछत्रायां' B.  २ 'नागह्रदे चः(च ?)' B.
३ 'च्छायापार्श्वो' A.  ४ 'मन्त्राधिराजः' B.
५ 'भायल' A. 'भालय' T, B.
६ 'मतुण्डकमुण्डस्थले' A. 'मतुण्डे मुण्डस्थले' B.

गङ्गाह्रदे सरस्थाने वीतभये चम्पायां अपापायां पुंड्र(ण्ड्र)[1]पर्वते नन्दिवर्द्धनकोटिभूमौ वीरः ॥

वैभाराद्रौ राजगृहे कैलासे श्रीरोहणाद्रौ श्रीमहावीरः ॥

अष्टापदे चतुर्विंशतिस्तीर्थंकराः[2] ॥

संमेत[3]शैले विंशतिर्जिनाः ॥

हेमसरोवरे द्वासप्ततिजिनालयाः ॥

कोटि[4]सि(शि?)ला सिद्धिक्षेत्रम् ॥

इति जैनप्रसिद्धानां तीर्थानां नामपद्धतेः ।
संग्रहो[5]ऽयं स्फुटीचक्रे श्रीजिनप्रभसूरिणा ॥
किंचिदत्र यथादृष्टं किंचिच्चापि यथाश्रुतम् ।
स्वतीर्थनामधेयानां पद्धतौ लिखितं मया ॥

समाप्त[6]स्तीर्थनामधेयसंग्रहकल्पः ॥

॥ ग्रं. ४९. अ. २१ ॥

---

१ 'पुंड्र(ण्ड्र ?)पर्वते' A. B. २ 'तीर्थकराः' A. B.
३ 'संमेतसे(शै ?)ले' A.
४ 'काटिसिला' A. 'कोटिशिला' B.
५ 'सं[ग्र ?]होऽयं' A. ६ 'समाप्त[ः]' A. B.

नमिऊण जिनवरं[1] [जिणं वीरं ?] कप्पं
सिरिसमवसरणरयणाए ।
पुव्वायरिअकयाहिं गाहाहिं चेव जंपेमि ॥ १ ॥
वाऊ[2] मेहा कमसो जोअणभूसोहि सुरहिजलवुट्टी ।
मणिरयणभूमिरयणं कुणंति[3] पुण कुसुमवुट्ठि वणा ॥ २ ॥
पायारतिअं कमसो कुणंति वररूप्पकणयरयणमयं ।
कंचणवसुमणिकविसीससोहिअं भवणजोइवणा ॥ ३ ॥
गाउ[4]अमेगं छस्सयधणुहपरिच्छिन्न[5]मंतरं तेसिं ।
अट्ठंगुलिक्करयणीतित्तीसं धणुहबाहल्लम् ॥ ४ ॥
पंचसयधणुच्चत्तं चउदारविराइआण वप्पाणं ।
सव्वप्पमाणमेयं निय(अ ?)निअहत्थेण य जिणाणं ॥ ५ ॥
सोवाणदससहस्सा[6] भूमीओ गंतु पढम[7]पायारो ।
पन्नासधणुहपयरो पुणो वि सोवाणपणसहसा ॥ ६ ॥
तत्थ विअ बीयवप्पो[8] पुव्वुत्तविही तयंतरे नेयो[9](या ?) ।
तत्तो तईओ[10] एवं बीससहस्सा य सोवाणा[11] ॥ ७ ॥
दस[12] पंच पंच सहस्सा(सा ?) सव्वे हत्थुच्चहत्थवित्थिन्ना ।
बाहिरमज्झब्भितंरवप्पाण कमेण सोवाणा ॥ ८ ॥

---

१ 'जिणिं(णं)वीरं(वरं ?)' A. २ 'वाक(ऊ ?)' B.
३ 'क(कु ?)णंति' B. ४ 'गाओ(उ ?)' B.
५ 'परिच्छि(च्छ ?)न्न' B. ६ 'दससहस्सो(स्सा ?)' B.
७ 'पढम[पायारो ?]' B. ८ 'बीअवप्पो' B.
९ 'नेया' A. B. १० 'न(त ?)ईओ' B.
११ 'सोवाणं(णा ?)' A. B. १२ 'दसं(स ?)' B.

तम्मज्झे मणिवीढं भूमिओ सड्ढदुन्निकोसुच्चम् ।
दोधणुसयवित्थिण्णं चउदारं धणुजिणधणु(समु ?)च्चं[1] ॥ ९ ॥
सिंहासणाइं चउरो मणिपडिच्छन्नाइं तेसु चउरूवो ।
पुव्वमुहो[2] ठाइ सयं छत्तत्तयभूसिओ भयवं[3] ॥ १० ॥
समहिअजोअणपिहुलो तहा असोगो दुसोलसधणुच्चो ।
पडिबिंबत्तयपमुहं कि[4]च्चं तु कुणंति वंतरिआ ॥ ११ ॥
परिसाअग्गे आइसु [5]मुणिवरवेमाणिणीउ [6]समणीओ ।
भवणवणजोइदेवी देवो[7]वेमाणिअ नरित्थी ॥ १२ ॥
जोअणसहस्सु(स्स ?)दंडो धम्मज्झओ कुडहिकेउसंकिन्नो ।
दो जक्ख चामरधरा जिणपुरओ धम्मचक्कं च १ ३ ॥
ऊसिय[8]धयमणितोरणअडमंगल[9]पुत्तकलसदामाइं ।
पंचालिअछत्ताइं पइदारं धूवघडिआओ ॥ १४ ॥
हेमसिअरत्तसामलवण्णा सुरवण[10]यजोइभवणवई ।
पइदारं वसुवप्पे [11]पुव्वाइसु ठंति पडिहारा ॥ १५ ॥
[12]जयविजयादि(जि ?)अअवरा जिअगोरा रत्तकणयनीलाभा ।
देवी पुव्वकमेणं [13]सत्थकरा ठंति कणयमए ॥ १६ ॥

---

१ 'धणुसमुच्चं' A. B.
२ 'पुव्वम(मु ?)हो' A. B.
३ 'भयव्वं' A.
४ A. पुस्तकेऽस्या गाथायाश्चतुर्थश्चरणस्त्रुटितः ।
५ 'मुनिवरवेमाणि[सम]णीओ' A.
६ 'णीओ' B.
७ 'देवा(वो ?)' A. B.
८ 'ऊसिअ' A. B.
९ 'पुंन(पुत्त ?)' A. B.
१० 'स(सु ?)रवण' A. B.
११ 'प(पु ?)व्वाइसु' A. B.
१२ 'जयविजयादि(जि ?)अ' A. B.
१३ 'सकत्थरा(त्थकरा ?)' B.

अउमुउडमंडिआ तह तुंबुरखट्टंगपुरिससिरिमाली ।
बहिवप्पदार दोसु वि पासेसुं ठंति पइवप्पं ॥ १७ ॥
बहिवप्पे जाणाइं बीए सत्तूवि मित्तभावगया ।
तिरिआ मणिमयछंदे ईसे पुण रयणवप्पबहिं[१] ॥ १८ ॥
बहिवप्पदारमज्झे दो दो वावीउ[२] हुंति वट्टम्मि ।
चउरंससमोसरणे इग इग वावीउ कोणेसु ॥ १९ ॥
उक्किट्ठि सीहनायं कलयलसद्देण[३] सव्वओ सव्वं ।
तित्थयरपायमूले करिंति देवा निवयमाणा ॥ २० ॥
चेइदुमपीढछंदगआसणछत्तं च चामराओ अ ।
जं चन्नं करणिज्जं करंति ते वाण[४]मंतरिआ ॥ २१ ॥
साहारणओसरणे एवं [५]जत्थिड्डि(ड्डि ?)मंत ओसरइ ।
इक्कुच्चिअ तं सव्वं करेइ भयणाउ इयरेसिं[६] ॥ २२ ॥
सूरुदय[७]पच्छिमाए ओगाहंतीइ पुव्वओ एइ ।
दोहिं[८] पउमेहिं पाया मग्गेण य हुंति सत्तन्ने ॥ २३ ॥
आदाहिण पुव्वमु[९]हो तिदिसिं पडिरूवगा[१०]उ देवकया ।
जिट्ठगणी अन्नो वा दाहिणपुव्वे अ दूरम्मि ॥ २४ ॥

---

१ 'वप्पवहि' B.　　२ 'वावीओ(उ ?)' B.
३ 'कलयंसद्देण' B.　　४ 'वाण' B.
५ 'जत्थिड्डि(ड्डि ?) मंतु' B.
६ 'इअरेसिं' A. B.
७ 'सूर(रु ?)दय' B.　　८ 'दा(दो ?)हिं' A.
९ 'पुव्वम(मु ?)हो' A.　　१० 'गाओ(उ ?)' B.

जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स ।
तेसिं पि तप्पभावा तयाणुरूवं हवइ रूवं ॥ २५ ॥
इंतं महड्डिअं पणिवयंति ठिअ[1]अवि(व?)यंति पणमंता ।
न वि जंतणा न विकहा न परुप्परमच्छरो न भयं ॥ २६ ॥
तित्थपणामं काउं कहेइ साहारणेण सद्देण ।
सव्वेसिं सन्नीणं जोअणनीहारिणा भयवं ॥ २७ ॥
जत्थ अपुव्वोसरणं अदि[2]ट्ठपुव्वं व जेण समणेणं ।
बारसहिं जोअणेहिं सो एइ अणागमो लहुआ ॥ २८ ॥
साहारणा सवंते तदुवओगो अगाहगगिराए ।
नय निव्विज्जइ सोया किढिवाणिअ[3]वा(दा?)सि आहरणा ॥
२९ ॥
सव्वाउ[4]अं पि सोआ झविज्ज जइ ऊ सययं जिणो कहइ ।
सीउण्हखुप्पिवासा परिस[5]मभए अविगणंतो ॥ ३० ॥
[6]वित्तीउ सुवण[7]स्सावारस अद्धं च सयसहस्साइं ।
तावइअं चि[8]य कोडी पीइ[9]दाणं तु चक्किस्स ॥ ३१ ॥
एअं चेव पमाणं नवरं रययं तु केसवा दिंति ।
[10]मंडलिआणसहस्सा पीइ[11](ई?)दाणं सय[12]सहस्सा॥३२॥

---

१ 'ठिअमवि(व्व ?)यंति' A.
२ 'अद्दि(दि ?)ट्ठपुव्वं त(व ?)' B.
३ 'दा(वा ?)सि' A.
४ 'सचाओ(व्वाउ ?)' A. B.
५ 'परिस्स(स ?)म' B.
६ 'वित्तीआ(उ ?)' A. B.
७ 'स(सु ?)वस्सस्सा' A.
८ 'चिअ' B.
९ 'पा(पी ?)ईदाणं' B.
१० 'मंडलिआण सहस्सा' इत्यारभ्य 'अन्ने विअदिंति' इत्यन्तं A. पुस्तके नास्ति केवलं 'इब्भमाईआ' इत्येव A. पुस्तकेऽस्ति ।
११ 'पीईदाणं' B.
१२ 'सयसहस्स' B.

भत्तिविभवाणुरूवं अन्ने वि अ हिंति दुब्भमाईआ ।
सोऊण जिणागमणं निउत्त[1]मणिओइएसुं वा ॥ २३ ॥
रायावरायमच्चो तस्सासइ पवरजणवओ वावि ।
[2]दुब्बलि खंडिअ बलि छडिअ तंदुलाणाढगं कलमा ॥ २४ ॥
भाइअ[3]गुणालिआणं अखंड[4]फुडिआण फलग[5]सरिआणं ।
कीरइ बली सुरावि अ तत्थेव छुभंति गंधाई ॥ २५ ॥
बलिपविसणसमकालं पुव्वदारेण ठाइ परिकहणा ।
तिगुणं पुरओ पाउण तस्सद्धं अवडिअं[6] देवा ॥ २६ ॥
अद्धद्धं अहिवइणो अवसेसं होइ पागयजणस्स ।
सव्वामयप्पसमणी कुप्पइ नन्नो अ छम्मासा ॥ २७ ॥
राओवणीअसीहासणोवविट्ठो व पायपीढम्मि ।
जिट्ठो अन्नयरो वा [इति ?] गणहारि(री ?) करेइ[7]
बीआए ॥ २८ ॥
इअ समवसरणरयणाकप्पो सुत्ता[8]णुसारओ लिहिओ ।
लेसुद्देसेण इमो जिणपहसूरीहिं पढिअव्वो ॥ २९ ॥

[इति ?] **समवसरणरचनाकल्पः** ॥

ग्रन्थाग्रं ४३ । आदितः ३२०८ ॥

---

१ 'निओ(उ ?)त्त' B.
२ 'दुव्वलि' B.
३ 'भाई(इ ?)अ' B.
४ 'फुरिआण' B.
५ 'सरिआणं' B.
६ 'अवडियं' B.
७ 'करेइ(करे ?) इ' B.
८ 'सुत्ताण(णु ?)सारओ' B.

आदितः सर्वकल्पेषु ग्रन्थाग्रमिह जा[1]तवत् ।
अनुष्टुभाम[2]ष्टयुता द्वशनप्र[3]मिताः(ता ?) शतीः(ती ?) ॥
श्रीधर्मघोषसूरयोऽप्येवं समवसरणरचनास्तवमाहुः—
' थुणिमो केवलिवत्थम्[4] ' ॥

---

१ ' जातवान्(वत् ?) ' A.
२ ' अष्टू(ष्ट ?)युता ' B.
३ ' दशनप्रमिताः(ता ?)शताः(ती ?) ' A. B.
४ ' ग्रं. २३[।]१२ ' इत्यधिकं A. B. पुस्तकयोः ।

श्वेताम्बरेण चारणमुनिनाचार्येण **वज्रसेनेन** ।
[१]**शकुय(का ?)वतारतीर्थे श्रीनाभेयः** [२]प्रतिष्ठितो जीयात् ॥
**कुडुङ्गेश्वरनाभेयदेव**स्यानल्पतेजसः ।
कल्पं जल्पामि लेशेन दृष्ट्वा शासनपट्टिकाम् ॥

पूर्वं **लाटदेश**मण्डनभृगुकच्छपुरालंकारे **शकुनिका**विहारे स्थिताः श्री**वृद्धवादिसूरयो** 'यो येन [३]निर्जी(र्जी ?)यते तेन तस्य शिष्येण भाव्य'मिति [४]प्रतिज्ञां विधाय वादकरणार्थं **दक्षिणा-पथा**यातं **कर्णाटभट्टदिवाकरं** निर्जित्य व्रतं [५]ग्राहयांचक्रिरे । **'सिद्धसेनदिवाकर'**इत्यभिधयाऽभ्यधुः । ततः कतिचिद्दिनै-[६]र्निःशेषानप्यागमानध्यजीगपत् । अन्यदा तु 'सकलानप्यागमान् संस्कृतानहं करोमी'ति तेन वचनमिदमूचे । ततः पूज्या अपीद-मभिदधिरे किं संस्कृतं कर्तुं न जानन्ति श्रीमन्त[७]स्तीर्थ(र्थं ?)करा गणधरा वा यदर्द्धमागधेनागमान[८]कथयत । तदेवं जल्पतस्तव महत्प्रायश्चित्तमापन्नम् । किमेतत्तवाग्रतः कथ्यते स्वयमेव जानन्नसि । ततो विमृश्याभिदधेऽसौ । भगवन्नाश्रितमौनो द्वादशवार्षिकं [९]पाराञ्चितं नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजो-हरणादिलिङ्गः प्रकटितावधूतरूपश्चरिष्यामीत्यावश्यकम् । उपयुक्त

१ 'शकय(का ?)वतार' A. B.
२ 'प्रतिष्टि(ष्ठि ?)तो' A. B.
३ 'निर्ज्जीयते' A. B.
४ 'प्रतिज्ञा(ज्ञां ?)व(वि ?)धाय' A.
५ 'ग्र(ग्रा ?)हा(ह ?)यां चक्रिरे' A.
६ 'निः[ः]शेषान्' A.
७ 'तीर्थक(ङ्क ?)रा' B.
८ 'अकथत्(त ?) A. B.
९ 'पाराचि(ञ्चि ?)तं A. B.

इति [1]गुरुभिरभिहितमाकर्ण्य देशान्तरग्रामनगरादिषु [2]पर्यटन् द्वादशे वर्षे [3]श्रीमदुज्जयिन्यां [4]कुडुङ्गेश्वरदेवालये शेफालिका-कुसुम[5]रञ्जिताम्बरालंकृत[6]शरीरः समागत्यासांचक्रे। ततो देवं [7]कस्मान्न[न ?]मस्यसीति लोकैर्जल्प्यमानोऽपि नाजल्पत्। एवं च जनपरम्परया श्रुत्वा सर्वत्रानृणीकृतविश्वविश्वंभराङ्कितनिजैक-वत्सरः श्रीविक्रमादित्यदेवः समागत्य जल्पयांचकार [8]चौर-लिलिचो भिक्षो! किमिति त्वया देवो न [9]नमस्यते। तत-स्तेनेदमवादि वादिना मया नमस्कृते देवे लिङ्गभेदो भवतामप्रीतये भविष्यति। राज्ञोचे—भवतु क्रियतां नमस्कारः। तेनोक्तं श्रूयतां तर्हि। ततः पद्मासनेन भूत्वा [10]द्वात्रिंशत् (द् ?)द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे।

तथा हि—

स्वयंभुवं भूतसहस्रनेत्रमनेकमेकाक्षरभावलिङ्गम्।

अव्यक्तमव्याहतविश्वलोकमनादिमध्यान्तमपुण्यपापम्॥ इत्यादि।

प्रथम एव श्लोके प्रासादस्थितात् शिखिशिखाग्रादिव लिङ्गाद्धूम-वर्तिरुदस्थात्। ततो जनैर्वचनमिदमूचे—अष्टविद्येशाधीशः कालाग्नि-रुद्रोऽयं भगवांस्तृतीयनेत्रानलेन भिक्षुं भस्मसात् करिष्यति।

---

१ 'गुरु[र ?]भिहित' B. २ 'पर्यटन(न् ?)' B.

३ 'श्रीमदुज्जय(यि ?)न्यां' A. B.

४ 'कुड(डु ?)ङ्गेश्वर' A.

५ 'रंजिताब(म्ब ?)रा' A. B. ६ 'स(श ?)रीर' A.

७ 'कस्मान्न[न ?]मस्यसीति' A. B.

८ 'चौरं (र ?)लिलिचो' A. ९ 'नमं(म ?)स्यते' A. B.

१० 'द्वात्रिंश(शि ?)काभिः' A. B.

ततस्तडिन्तेज इव सतडत्कारं प्रथमं ज्योतिर्निर्गत्याऽप्रतिचक्राताद्य-मानमिथ्यादृष्टिदैवतमामूलाल्लिङ्गं द्विधा भित्त्वा प्रादुरास पद्मासनासीनः स्वयंभूर्भगवन्नाभिसूनुः । तदनया दर्शनप्रभावनया तीर्णः[1] पाराञ्चिताम्भोनिधिरिति विमुच्य रक्ताम्बराणि प्रकटीकृत्य [2]मुखवस्त्रिकारजोहरणादिलिङ्गानि महाराजं धर्मलाभाचरैराशी-र्वादयांचक्रे वादीन्द्रः । ततो विनयपुरस्सरं—

सूरये सिद्धसेनाय [3]दूरादुच्छ्रितपाणये ।
धर्मलाभ इति प्रोक्ते ददौ कोटिं नराधिपः ॥

तत प्रभून् क्षमयित्वा नृपतिः[4] स्तुतिमकार्षीत् ।

यथा—

उद्गूढपाराञ्चितसिध्ध(द्ध ?)सेन-
[5]दिवाकराचार्यकृतप्रतिष्ठः ।
श्रीमान् कुडुङ्गेश्वरनाभिसूनु-
र्देवः शिवायास्तु जिनेश्वरो वः ॥

ततो भगवतो भट्टश्रीदिवाकरसूरेर्देशनया संजीविनीचारि-चरक[6]न्यायेन स्वाभाविकभद्रकतया विशेषतः सम्यक्त्वमूलां देशविरतिं प्रत्यपादि श्रीविक्रमादित्यः । ततश्च गोह्रदमण्डले च सांबद्राप्रभृतिग्रामाणामेकनवतिं, चित्रकूटमण्डले वसाडप्रभृति-ग्रामाणां चतुरशीतिं, तथा घुंटारसीप्रभृतिग्रामाणां चतुर्विंशतिं

---

१ 'तीर्ण[ः]' B. २ 'मुखवस्त्रिकाहरणादि' B.
३ 'दूउद्यू(दू ?)रा' B. ४ 'न्टपति[ः]' B.
५ 'दिवाकराचार्य[कृत ?]प्रतिष्ठ(ष्ठः ?)' B.
६ 'चारिव(च ?)' A.

मोह[1]डवासकमण्डले ईसरोडाप्रभृतिग्रामाणां षट्पञ्चाशतं [2]श्रीकुडुंगेश्वरऋषभदेवाय शासनेन [3]स्वनिःश्रेयसार्थमदात् ।

ततः शासनपट्टिकां श्रीमदुज्जयिन्यां संवत् १ चैत्र[4]सुदी १ गुरौ भाटदेशीयमहाक्षपटलिकपरमार्हत[5]श्वेताम्बरोपासकः(क ?)-ब्राह्मणगौतमसुतकात्यायनेन राजालेखयत् । ततः श्री-कुडुङ्गेश्वरऋषभदेवप्रकटी[6]भवनदिनात् प्रभृति सर्वात्मना मिथ्यात्वोच्छेदेन सर्वानपि जटाधरादीन् दर्शनिनः श्वेताम्बरान् कारयित्वा परिमुक्तमिथ्यादृष्टिदेवगुरुः सकलामप्यवनीं जैनमुद्राङ्कितां चकार । ततः परितुष्टैः श्रीसिद्धसेनसूरिभिरभिदधे वसुधाधवः—

पुन्ने वाससहस्से सयम्मि अह(हि ?)अम्मि नवनवइकलिए ।
होहि कुमरनरिंदो तुह विक्कमराय ! सारिच्छो ॥

इत्थं ख्यातिं सर्वजगत्पूज्यतां चोपगतः श्रीकुडुङ्गेश्वर-युगादिदेव इति ।

कुडुङ्गेश्वरदेवस्य कल्पमेतं यथाश्रुतम् ।
रुचिरं रचयांचक्रुः श्रीजिनप्रभसूरयः ॥ १ ॥

इति कुडुङ्गेश्वरयुगादिदेवकल्पः ।

ग्रं० ५५ अ० १८ ॥

---

१ 'मा(मो ?)हउ' A. २ 'श्रीकुड(ड ?)ङ्गेश्वर' A.
३ 'खं(ख ?)' A. B. ४ 'शु(सु ?)दी' B.
५ 'श्वेताम्बरोपासकः(क ?)' A. B.
६ 'प्रकटीभवन्(न ?)' A. B.

यः स्यादाराधको जन्तुः श्रेयस्तत्कीर्तनाद्भवम् ।
इत्यालोच्य हृदा किंचिद् व्याघ्रीकल्पं वदाम्यहम् ॥ १ ॥
श्रीशत्रुञ्जयनाभेय[1]चैत्र(त्य ?)वप्रस्य कर्हिचित् ।
प्रतोलीद्वारमावृत्य काचिद्व्याघ्री [2]समस्थित(ता ?) ॥ २ ॥
निरीच्य [3]निश्चलाङ्गीं तामातङ्कातुरमानसाः[4] ।
जनाः श्राद्धा जिनं नन्तुं बहिस्तो न [5]ढुढौकिरे ॥ ३ ॥
राजन्यः साहसी कोऽपि तस्याः पार्श्वमुपासृपत् ।
सा तु तं प्रति नाकार्षीत् हिंसाचेष्टां मनागपि ॥ ४ ॥
विश्वस्य बाहुजस्तस्य कुतोऽप्यानीय तत्पुरः ।
आमिषं मुमुचे सा च दृशापि न तदस्पृशत् ॥ ५ ॥
अथ श्राद्धजनोऽप्येत्य [6]त्यक्तभीस्तत्पुरः क्रमात् ।
तरसा सरसं भक्ष्यं पानीयं चोपनीतवान् ॥ ६ ॥
तदप्यनिच्छन्तीं[7] दृष्ट्वा तां दध्यौ जनता हृदि ।
नूनं जातिस्मरैषात्र तीर्थेऽनशनमाददे ॥ ७ ॥
श्लाघ्यस्तिर्यग्भवोऽप्यस्याश्चतुर्द्वाहारमुज्झितः ।
एकाग्रचक्षुषा चैषा देवमेव [8]निरीक्षते ॥ ८ ॥
[9]अभ्यर्च्य गन्धपुष्पाद्यैः श्राद्धाः साधर्मिकीधिया ।
संभावयांबभूवुस्तां स्फीतसंगीतकोत्सवैः ॥ ९ ॥

---

१ 'चैत्र(त्य ?)' A. B.
२ 'समस्थिता' A. 'समस्थिताः' B.
३ 'निश्चलाङ्गी(ङ्गीं ?)' A. B. ४ 'मानं(तं)' A.
५ 'ढु(ढु ?)ढौकिरे' A. B. ६ 'त्यक्तभी[स्त ?]त्पुरः' A.
७ 'अनिच्छतीं (न्तीं ?)' A. 'अनिच्छंती(तीं ?)' B.
८ 'निरिक्ष्य(क्ष ?)ते' B. ९ 'अन्य(भ्य ?)र्च्ये' B.

निराकारं प्रत्याख्यातं [1]तेऽथ तस्या [2]अचीकरन्।
मनसैव श्रद्दधाना सा स्वीचक्रे च तन्मुदा ॥ १० ॥
इत्थं सा तीर्थमाहात्म्यात्सम्यध्यक्षुद्धवासना।
[3]दिनान्युपोष्य सप्ताष्टान्नष्टपापा ययौ दिवम् ॥ ११ ॥
[4]चन्दनागुरुभिस्तस्या वपुः संस्कार्य संज्ञिनः।
प्रतोल्या दक्षिणे पक्षे शैलीं मूर्तिं न्यवीविशन् ॥ १२ ॥
तीर्थचूडामणिर्जीयात्सैष श्रीविमलाचलः।
भवेयुर्यत्र [5]तिर्यञ्चोऽप्येवमाराधकाग्रिमाः ॥ १३ ॥
**व्याघ्रीकल्पमिमं कृत्वा श्रीजिनप्रभसूरयः।**
पुण्यं यदार्जयंस्तेन **श्रीसङ्घो**ऽस्तु[6] सुखास्पदम् ॥ १४ ॥

इति [7]**व्याघ्रीकल्पः** समाप्तः ॥

---

१ 'त(तेऽ ?)थ' A.
२ 'अचीकरत्(न् ?)' A. B.
३ 'दिनानु(न्यु ?)' A. B.
४ 'चन्दनाग(गुरुभिः ?)' B.
५ 'तिर्यचो(ञ्चो ?)' B.
६ 'अस्य' B.
७ 'इति व्याघ्रीकल्पः' B.

अट्ठावयदेहपहं भव[1]करिअट्ठावयं नमिअ उसहम् ।
अट्ठावयस्स गिरिणो जंपेमि समासओ कप्पं ॥ १ ॥

अत्थि इहेव जंबुद्दीवे दीवे[2] भारहे वासे दच्छि(क्खि ?)[3]ण-भरहद्धमज्झे नवजोअणवित्थिन्ना बारसजोअणदीहा अउज्झा[4] नाम नयरी । सा य सिरिउसभ-अजिअ-अभिनंदण-सुमइ-अणंताइजिणाणं जम्मभूमी । तीसे अ उत्तरदिसाभाए बारसजोअणेसुं अट्ठावओ नाम केलासापराभिहाणो नगवरो अट्ठजोअणुच्चो, सच्छफालिहसिलामओ, इत्तुच्चिअ लोगे धवलगिरित्ति[5] पसिध्धो[6](द्धो ?) । अज्जवि अउज्झा-परिसरवत्तिउड्डुयज्झाडोवरिं ठिएहिं निम्मले नहयले धवला सिहरपरंपरा दीसइ । सो पुण महासरोवरघणसरसपायव-निज्झरवारिपूरकलिओ परिपाससंचरंतजलहरो मत्तमोरा[7]इविहग-कुलकलयलमुह[8]रो किंनरखेअररमणीरमणिज्जो चेइअवंदणत्थमा-गच्छंतचारणसमणाइलोगो आलोअमित्तेणं पि खुहापिवासाव-हरणो आसन्नवत्तिमाणससरोवरविराइओ अ । एअस्स[9] उव-च्चयासुं साकेअवासिणो जणा नाणा[10]विहकीलाहिं कीलंति ।

---

१ 'भ[व ?]करिअ' B.  २ 'जम्बुदी(द्दी ?)वे' B.
३ 'दच्छि(क्खि ?)ण' A. B.  ४ 'अओ(उ ?)ज्झा' B.
५ '—त्ति पसिद्धो' इत्यारभ्य 'निज्झरवारिपूरकलिओ । परि'-इत्यन्तं नास्ति A. पुस्तके ।
६ 'पसिद्धो' B.  ७ 'मत्तमो[रा ?]इ' B.
८ 'कलय[ल ?]मुहरो' A.  ९ 'एयस्स' B.
१० 'नाण[ा]विह' A. 'नाणाविही' B.

तस्सेव य सिहरे उसभसामी चउद्स[1]समभत्तेणं पज्जंकासण-ट्टिओ अणगा[2]राणं दस[3]हिँ सहस्सेहिं समं माहवहुलतेरसीए अभीइरिक्खे पुव्वण्हे निव्वाणमनु(णु ?)पत्तो[4]। तत्थ सामिणो देहं सक्कारिअं सक्काइएहिं। पुव्वदिसाए सामिणो चिआ, दक्खि[5](क्खि ?)णदिसाए इक्खागुवंसीणं, पच्छिमदिसाए सेस-साहूणं। तम्मि चिआठाणतिगे देवेहिं थूभतिगं कयं। भरह-चक्कवट्टिणा य सामिसक्कारासन्नभूयले जोअणायामो तदद्ध-पिहुलो तिगा[6]उअसमूसिओ सिं[7]हनिसिज्जानामधिज्जो पासाओ रयणो[8]वलेहिं वड्डइ[9] रय[10]णेण कारिओ। तस्स चत्तारि दुवाराणि फालिहमयाणि। पइदारं उभओ पासेसुं सोलस रयणचंदणकलसा, पइदारं सोलसरयणमया तोरणा, दारे दारे सोलस अट्ठमङ्गलाइं, तेसु दुवारेसु चत्तारि विसाला मुहमंडवा, तेसिं मुहमंडवाणं पुरओ चत्तारि पिक्खामंडवा[11], तेसिं पिक्खामंडवाणं मज्झभागेसु वइरामया अक्खवाडा, अ[12]क्खवाडे अक्खवाडे मज्झभागे रयणसिंहासणं। पत्तेअं

---

१ 'चओो(उ ?)दस' B.   २ 'अणगाराणां' B.

३ 'दसहि' A.   ४ 'अणुपत्तो' B.

५ 'दच्छि(क्खि ?)ण दिसाए' A. B.

६ 'तिगाओो(उ ?)स' B.

७ 'सिंहनिसिंह(?)निसिज्जानामधिज्जो' A. B.

८ 'बट्ट(ड्ड ?)इ' B.   ९ 'रयणोब(व ?)लेहि A. B.

१० 'रयणे[ण ?]' A.   ११ 'पिखा(क्खा ?)मंडवा' A.

१२ 'अक्खाडे[अक्खवाडे ?]' A.

*पिक्खामंडवओ मणिपीढिआओ। तदुवरि रयणमया चेइअथुभा।*
*तेसिं चेइअथूभाणं पुरओ पत्तेअं पइदिसं महइमहालिआ*
मणिपीढिआ। तदुवरि पत्ते[1][अं ?] चेइ[2]य(अ ?)पायवा। पंचसय-
धणुप्पमाणाओ चेइअथूभसंमुहीओ स[3]व्वंगं रयणनिम्मिया उसभा-
वद्धमाणा-च[4]न्दा(चंदा ?)णणा-वारिसेणानामिगाओ
पलिअंकासणनिसन्नाओ मणोहराओ सासयजिणपडिमाओ नंदी-
सरदीवचेइअमज्झे ्व कत्था[5]। तेसिं च चेइअथूभाणं पुरओ
पत्तेअं चेइ[6]य(अ ?)पायवा, तेसिं चेइ[7]यपायवाणं पुरओ पत्तेअं
मणिपेढिआओ, तासिं च उव[8]रि पत्तेअं इंदज्झओ, इंद-
ज्झयाणं पुरओ पत्तेअं नंदापुक्खरिणीति सोवा[9]णा सतोरणा
सच्छ[10]सीअलजला पुन्ना विचित्तकमलसालिणी मणोहरा
दहिमु[11]हाधारपुक्खरिणीनिभा सोहनिसिज्जा महाचेइअमज्झ-
भागे महइमहालिआ मणिपीढिआ। तीए उवरि चित्त-
रयणमओ देवच्छंदओ, तदुवरि नाणावन्नंसुगमओ उल्लोओ,
उल्लोअस्स अंतरे पासओ अ वइरामया अंकुसा, तेसु अंकुसेसु

---

१ 'पत्तेअं' B.

२ 'चेइय(अ ?)पायवा' A. 'चेइय पयावा (पायवा ?)' B.

३ 'सव्वंगरयणं' B. ४ 'चंद(दा ?)णणा' A.

५ 'वा(व्व ?) कत्था' A. 'व(व्व ?)कत्था' B.

६ 'चेइअ' A. ७ 'चेई(इ ?)अ' A.

८ 'ओ(उ ?)वरिं' A. ९ 'ते सोवाणा' B.

१० 'प(स ?)च्छ' ११ 'दि(द ?)हिमुहाधार' B.

ओ[१]लंबिआ कुंभमिज्जआमलगथूभमुत्ताहलमया हारा, हारपंतेसु अ विमलाओ मणिमालिआओ, म[२]णिमालिआणं पंतेसु वइर-मालिआओ । चेइअभित्तीसु विचित्तमणिमया गवक्खा उब्भज्झ-माणा[३]ऽगरुधूमसमूहवमालिआ । तम्मि देवच्छंदे रयणमईओ उसभाइचउवीसजिणपडिमाओ निअनिअसंठाणमाणवन्न(ण ?)-धराओ । उसभ-अजिअ-संभव-अभिनंदण-सुमइ-सुपास-सीअल-सिज्जंस-विमल-अणंत-धम्म-संति-कुंथु-अर-नमि-महावीराणं सुवण्णमईओ, मुनि-सुव्वय-नेमीणं रायावट्टमईओ, चंदप्पह-सुविहीणं फलिहमईओ, मल्लि-पास-नाहाणं वेरुलिअमईओ पउमप्पह-वासुपुज्जाणं पउमरा[४]यमईओ । तासिं च सव्वासिं पडिमाणं लोहिअक्खपडिसेगा अंकरयणमया नहा[५] । पडिसेगो नाम नहपज्जंतेसु जावयर-सुव्वलोहिअ[६]ख(क्ख ?)मणिरससेगो जं दिज्जइ । नाहीकेसंत-भूमीजीहातालुसिरिवच्छचुं(चू ?)चुग[७]हत्थपायतलानि तवणिज्ज-मयाणि । नयणपम्हाणि कणीणिगाओ मंसूभमुहाओ रोमाणि सिर[८]केसा रिट्ठरयणमया, उट्ठा विद्दुममया, फालिहमया दंता, वइरा(र ?)मईओ सीसघडीओ । अंतो(?) लोहिअक्खपडिसेगाओ

---

१ 'उ(ओ ?)लंबिआ' B.

२ 'मणिमालिआणं पंतेसु वइरमालिआओ' इति B. पुस्तके नास्ति ।

३ 'उब्भ[ज्झ ?]माणा' A. B.

४ 'पउमरायमईउ(ओ ?)' A.

५ 'त(न ?)हा' B.

६ 'लोहिअक्ख' B.

७ 'चूचूग' B.

८ '[सि ?]र केसाणि' B.

सुवसमइ(ई ?)श्रो नासिश्राश्रो। लोहिअक्खपडिसेगपंताइं अंक-मयाइं लोअणाइं। तासिं च पडिमाणं पिट्ठे पत्तेअं इक्किका रयणमयी मुत्तापवालजालं कंसकोर[1]ट्टमल्लदामं फालिहमणिदंडं सिश्रा[2]थवत्तं धारिंती छत्तहरपडिमा, तासिं च उभयपासे पत्तेअं उक्खित्तमणिचामराश्रो रयणमईश्रो चमरधारपडिमाश्रो। पडिमाणं च अग्गे पत्तेअं दो दो णागपडिमाश्रो, दो दो जक्ख[3]-पडिमाश्रो, दो दो भूअपडिमाश्रो, दो दो कुंडधारपडिमाश्रो कयंजलीश्रो रयणमईश्रो सव्वंगुज्जलाश्रो पज्जुवासिंति। तहा देवच्छंदे चउवीसं रयणघंटाश्रो, चउव्वीसं माणिक्कदप्पणा, तहेव ठाणट्ठिअदीविश्राश्रो सुवसमईश्रो। तहा रयणकरंडगाइं, पुप्फ[4]चंगेरिश्राश्रो लोमहत्थाइं, पडलीश्रो, श्राभरणकरंडगाइं, कणगमयाणि धूवदहणाणि, श्रारत्तिश्राणि, [5]रयणमंगलदीवा, रयणभिंगारा, रयणत्थालाणि, तवणिज्जपडिग्गहा, रयणचंदण-कलसा, [6]रयणसिंहासणाणि, रयणमयाणि अट्ठमंगलाणि, सुवस-म[7]या तिल्लसमुग्गया, कणगमयाणि धूवभंडाणि, सुवसमया उप्पलहत्थगा। एअं सव्वं पत्तेअं पडिमाणं पुरश्रो ऊत्या।

---

१ 'कोरंट' A. 'कोरट' B. २ 'सिआयवतं(त्तं ?)' B.

३ 'दो दो जक्खपडिमाश्रो दो दो भूअपडिमाश्रो' इति B. पुस्तके नास्ति। ४ 'पुप्फ(प्फ ?)' B.

५ 'रैयणमंगलदीवा' इत्यारभ्य, 'रयणचंदणकलसा' इत्यन्तं A. पुस्तके नास्ति। 'रयणमंगलदीव(वा ?)' B.

६ 'रयणसिंहासहा(?)सणाणि' B. ७ 'सुवसमय(या ?)' B.

तं चेइअं चंदकंतसालसोहिअं, ईहामिगउ[1]सभमगरतुरंगमनर-किंनरविहगवाल[2]रुरु[3]सरभचमरग[4]यवणलयाविचित्तं, रयणथंभ-समाउलं, पडागारमणिज्जं, कंचणधयदंडमंडिअं, उअट्टिअकिंकिणी-सद्दसुहलं, उवरि पउमरायकलसविराइअं, गोसीसचंदणरस-थासयलंछिअं, माणिक्कसा[5]लभंजिआहिं विचित्तचिट्ठाहिं अहि-ट्ठिअनिरूवं, बार[6]देसेसु(समु ?)भयओ[7] चंदणरसलि[8]त्तकलस-जुअलंकिअं, तिरिअं (?) वट्टोलंविअधूविअसुरहिदामरम्मं, पंचवस-कुसुमरइ[अ ?]घरतलं कप्पूरागरुमिगमयधूवधूमंधारिअं, अच्छर-गणसंकिलं, विज्जाहरीपरिअरिअं, [9]अग्गओ पासओ पच्छा य चारुचेइअपा[10]यवेहिं मणिपीढिआ[11]हिं च विभूसिअं, भरहस्स आणाए जहाविहि वद्ध(ड्ढ ?)इ[12]रयणेण निप्पाइअं । तत्थेव दिव्वरयणसिला[13]मईओ नवनवइभाऊणं पडिमाओ कारिआओ । अप्पणो अ पडिमा सुस्सूसमाणा कारिआ । चेइआओ बाहिं एगं भगवंतस्स उसभसामिणो थूभं एगूणं च सयं भाउगाणं थूभे कारविंसु । इत्थ गमणागमणेणं नरा पुरिसा मा आसायणं का(क ?)हिंति[14] त्ति लोहजंतमया आरक्खगपुरिसा कारिआ ।

---

१ ‘ओ (उ ?)सभ मग[र ?]’ B. २ ‘वालगरुरु’ A.

३ ‘सरस(भ ?)’ B. ४ ‘ग[य ?]वग’ B.

५ ‘सालि(ल ?)’ B. ६ ‘वारदेस(से ?)’ B.

७ ‘-सुभयओ’ B. ८ ‘रसलित्ते(त्त ?)’ A.

९ ‘अग्गओ पासओ’ इति A. पुस्तके नास्ति ।

१० ‘पायवि(वे ?)हिं’ B. ११ ‘पीढआहिं’ B.

१२ ‘वट्ट(ड्ढ ?)इ’ B. १३ ‘सिलामईउ(ओ ?)’

१४ ‘कहिंति’ B.

तेण तं अगम्मं जायं। गिरिणो अ दंता दंडरयणेणं छिन्ना। [1]अओ सो[2] गिरी अणारोहि(हणि ?)ज्जो जाओ। जोअणंतराणि अ अट्ठपयाणि माणुसअलंघणिज्जाणि कारिआणि। अओ चेव 'अट्ठावउ[3]' त्ति नामं पसिद्धं।

तओ कालक्कमेण चेइअरक्खणत्थं सट्ठिसाहस्सीए सगर-चक्कवट्टिपुत्ताणं दंडरयणेण पुढविं खणित्ता बोले (?) सहस्सजोअणा परिहा कया, दंडरयणेण गंगातडं विदारित्ता जलेणं पूरिआ। तओ गंगा खाइअं पूरित्ता अट्ठावयासण्णगामनगरपुराईअं पला[4]वेउं पउत्ता। पुणो दंडरयणेणं आयड्ढिअ कुरूणं मज्झे हत्थिणाउरं दचि[5](क्खि ?)णेण, कोसलदेसं पच्छिमेण, पयागं उत्तरेण, कासिदेसस्स द[6]चि(क्खि ?)णेणं विंझ[7]-मज्झे द[8]क्खिणेणं, मगहाणं उत्तरेणं, मग्गनईओ कड्ढं(ड्ढं ?)तो सगरा[9]इट्ठेण जण्हुपुत्तेणं भगीरहकुमारेणं पुव्वसमुद्दमोआ-रिआ। तप्पभिइ[10] गंगासागरतित्थं जायं। इत्थेव य पव्वए अट्ठ उ[11]सभसामिणो नत्तुआ, नवनउई वालुवल्लिप्पमुहा पुत्ता

---

१ 'अउ(ओ ?)सो' A., 'अओ से (सो ?)' B.
२ 'से(सो ?)' B.
३ 'अट्ठावओ त्ति' B.
४ 'अ(प ?)लावेउ(उं ?)' B.
५ 'दच्चि(क्खि ?)णेण' A.
६ 'दच्चि(क्खि ?)णेणं' A. B.
७ 'वं (विं ?)झ' A. B.
८ 'दच्चि(क्खि ?)णेणं' B.
९ 'सगराइट्ठे (ट्ठे ?)ण' A., 'सगराइट्ठे(ट्ठे ?)णं' B.
१० 'तप्पभिइं(इ ?)' B.
११ 'ओ(उ ?)सभ' A.

[1]य सामिणा स(सि ?)द्धिं एवं अट्टुत्तरसयं एगसमएण[2] उक्कोसो-गाहणाए अच्छेरयभूआ सिद्धा।

इत्थ पव्वए ससत्तीए आरोढुं जो मणुओ चेइआइं वंदइ [3]सो मुक्खं इहेव भवे पाउणइत्ति सिरिवध्ध(द्ध ?)माण-सामिणा सयं वण्णिओ एसो। तं सोउं भयवं गोयम[4]सामी लध्धि(द्धि ?)निही इमं नगवरमारूढो। चेइआइं वंदित्ता असोग-तरुतले वेस[5]मणस्स पुरओ साहूणं तवकिसिअंगत्तणं वक्खाणंतो सयं च उवचियसरीरो वेस[6]मणु(णस्स ?)—'अहो ! अन्नहावाई कारि' त्ति। विअप्पनिवारणत्थं पुंडरीयज्झयणं पण्णविंसु। पुंडरीओ किल पुट्ठसरीरो वि भावसुद्धीए सव्वट्ठसिद्धिं गओ। कंडरीओ उण दुब्बलदेहो वि सत्तमपुढवीए। तं च पुंडरीय-ज्झयणं वेसमणसामाणिएणं अवधारिअं गोअमसुहाओ सोऊणं। सो अ तुंबवणसन्निवेसे धणगिरिपत्तीए सुनंदाए गब्भे उव[7]वज्जिअ दसपुव्वधरो वइरसामी जाओ। अट्ठावयाओ ओअरमाणेणं व गोअमसामिणा कोडिन्नदिन्न[8]सेवालि-

---

१ 'नत्तुअ(आ ?)' A. B. २ 'अच्छेरअ' B.

३ 'सो मुक्खं इहेव' इत्यारभ्य 'इमं नगरमारूढो' इत्यन्तं A. पुस्तके नास्ति। ४ 'गोअमसामी' B.

५ 'वेसमणु(ण ?)स्स' A.

६ 'वेसमणु(णस्स ?) हओ(अहो)' A., 'वेसमण[स्स]अहो' B.

७ 'उववज्झिअ' B.

८ 'कोडिन्न[दिन्न ?] सेवालिना(तां ?)' B.

तावसा तिउत्तरपंनर[1]ससयसंखा दिक्खिया। ते खलु जणपरंपराए इत्थ तित्थे चेइअ वं[द ?]गो[2] सिवं इहेव पावइ त्ति वीरवयणं सुच्चा पढमबीअतइअमेहलासु जहासंखं कोडिन्नाइआ अरूढा अहेसि[3]। तओ परं गंतुमचयं ता गोअमसामिं अप्पडिहय-मुत्तरंतं दट्ठुं विम्हिअ पडिबुद्धा नि[4]क्खंता य।

तत्थेव पव्वए भरहचक्कव[5]ट्टिपमुहाओ अणेगमहरिसिकोडीओ सिद्धाओ। [6]तत्थेव य सुबुद्धिनामसगरचक्किमहा[7]मच्चो जह्नु-माईणं सगरसु[8]आणं पुरओ आइच्चज[9]साओ आरब्भ पंचास-लक्खकोडिसागरोवमकालमज्झे भरहमहारायवंस[10]समुब्भूआणं रायरिसीणं चित्तंतरगंडिआए स[11]व्वट्ठसिद्धिगइए [मुक्खगइं च वाहरित्था।] [इत्थेव पव्वए पव्वयणदेवयानीयाए वीरमईए] चउवीस[12]जिणपडिमाणं भाले सुवण्णमया रयणखचिआ तिलया दिन्ना। तओ तीए धूस[13]रिभवं जुगलधम्मिभवं देवभवं [14]च लद्धूणं

---

१ 'पंनरससय(सय ?)A., 'पंनरसभ(स ?)य' B.
२ 'वंदगो' B.
३ 'अदे(हे ?)सि' A.
४ 'निक्खं नाया(ता यं ?)' B.
५ 'चक्कावट्ठि(ट्टि ?)' A.
६ 'तत्थे च(व ?) य' B.
७ 'मच्चास(म ?)चो' B.
८ 'सगरसुअ(आ ?)णं' A., 'सगरसअ(सुआ ?)णं' B.
९ 'आइच्चजसाउ(ओ ?)' A.
१० '-वंससमुब्भूआणं राय-' इति A. इति पुस्तके नास्ति। 'समुब्भु (ब्भू ?)आणं' B.
११ 'सव्वं(व्वट्ट ?)' A.
१२ 'चउव्वीस' B.
१३ 'धूसरी(रि ?)भवं' B.
१४ 'चलद्दू(द्धू ?)णं' A.

दमयन्तीभवे संपत्ते तिमिरपहयरावहारिभालयले सा[1]भाविश्रं तलयं संजायं।

इत्थेव पव्वए वालिमहरिसी कयंकाउस्सग्गो ठिश्रो। श्रह विमाणखलनकुविएण दसग्गीवेण पुव्ववेरं सरंतेणं तल[2]भूमिं खणित्ता तत्थ पविसिश्र एश्रं निश्रवेरिणं सह श्रट्ठावयगिरिणा उप्पा[3]डिश्र लवण[4]समुद्दे खिवामि त्ति बुद्धीए विज्जासहस्सं समरित्ता उ[5]प्पाडिश्रो गिरी। तं च श्रोहिनाणेण नाउं चेइश्ररक्खा[6]निमित्तं पायंगुट्ठेण गिरिमत्थ(र)यं सो रायरिसी [7]चंपित्था। तश्रो संकुचिश्रगत्तो[8] दसा[9]णणो मुहेण रुहिरं वमंतो श्रारावं मिल्हित्था। तत्तुच्चिश्र 'राव[10]णु'त्ति पसिद्धो। तश्रो मुक्को दयालुणा महरिसिणा पाएसु पडित्ता खामित्ता य सट्ठाणं गश्रो। इत्थेव लंकाहिवई जिणाणं पुरश्रो पिक्खणयं च[11]रिंतो दिव्ववसेण वीणातंतीए तुट्टाए मा पिक्ख[12]णवरस-भंगो होउत्ति निश्रभुश्राश्रो[13]न्हारु(उं) कड्ढित्तुं[14]वीणाए[15]लाइ।

---

१ 'संभाविय' B
२ 'तलभूमि(मिं ?)' B.
३ 'श्रो(उ ?)प्पाडिय ? B.
४ 'भ(ल ?)वण' A.
५ 'उप्पाडिउ(श्रो ?)' A.
६ 'चेइश्र...क्खा निमित्तं' B.
७ 'वं(चं ?)पित्था' B.
८ 'गत्ते(त्तो ?) B.
९ 'दसाणणा(णो ?)' B.
१० 'वराणु(रावणु ?)त्ति' B.
११ 'करिंतो' B.
१२ 'पिक्खणय[रस ?].भंगो' B.
१३ 'न्हारं(उं ?)' A. B,
१४ 'कड्डि(ड्ढि ?)त्तु' A., कवि(ड्ढि ?)' B.
१५ 'पा(ए ?)लाइश्र' B.

अबं(एवं ?)भुअवीणावायणए भत्तिसाहसतुट्टेण धरणिंदेण तित्थ-वंदणागएण रावणस्स अ[1]मोहविजया सत्तिरूवकारिणी विज्जा दिन्ना।

तत्थेव पव्वए गोअमसामिणा सिंह[2]निसिज्जाचेइअ[3]स्स दक्खिणदुवारे पविसंतेण पढमं चउण्हं संभवाईणं पडिमाओ वंदिआओ। तओ पयाहिणेणं पच्छिमदुवारे सुपा[4]साईणं अट्ठण्हं। तओ उत्तर[5]दुवारे धम्माई[6]ईणं दसण्हं। तओ पुव्व-दुवारे दो चेव उसभअजि[7]याणं[ति।]।

तित्थमिणमगम्मं तावत् फ[8]लिहा वणगहणसंवरवा[9]लेहि-(हिं ?) जलपडिबिंबिअचेइअज्झयकलसाइं पि [10]जं पिच्छे।

भविओ विसुद्धभावो पूआन्हवणाइ तत्थ वि कुणंतो।
पावइ जत्ताइफलं जं भा[11]वोच्चिअ फलं दिसइ॥
भरहेसरनिम्मविआ चेइअथूभे इहं पडिमजुत्ते।
जे पडि(ण)मं[12]ति महंति अ ते धंना ते सिरीनिलया॥

---

१ 'अमोहं विज्ज(ज ?)या' A.
२ 'सि(सिं ?) [ह ?]निसिंहज्जा' B.
३ 'चे[इ ?]अस्स' A.
४ '[सु ?]पासाईणं' A.
५ '[उ ?]त्तर' B.
६ 'धम्माईणं' B.
७ 'अजियाणं' A., 'अजिआणं' B.
८ 'फलिहा' B.
९ 'स...रवालेहिं' B.
१० 'जं पिछे(च्छे ?)' B.
११ 'भावोच्चियफलं' B.
१२ 'पडि[ण ?]मन्ति' A. B.

इअ अट्ठावयकप्पं जिणपहसूरीहिं [1]निम्मिअं भव्वा ।
भाविंति निअ[2]मणे जे तेसिं कल्ला[3]णमुल्लसइ ॥
अष्टापदस्तवे पूर्वं योऽर्थः संक्षिप्य कीर्तितः ।
विस्तरेण स एवास्मिन् कल्पेऽस्माभिः प्रकाशितः ॥

इति श्रीअष्टापदकल्पः [समाप्तः][4] ॥ ग्रं० ११८ ॥

---

१ 'निमि(म्मि ?)यं' A.
२ 'नियमेण(नियमणे ?)' B.
३ 'काज(?)णाण' B.
४ 'समाप्तः' A. B. पुस्तकयोरधिकम् ।

आदितः सर्वकल्पेषु ग्रन्थमानमजायत ।
अनुष्टुभां पंचत्रिंशच्छतौ समधिका [१]त्रिभिः ॥

अभिवन्द्य जगद्वन्द्यान् श्रीमतः शान्तिकुन्थ्वरान् ।
स्तुत्यं वास्तो[२]ष्पतिस्तोमैः स्तौमि तीर्थं गजाह्वयम् ॥ १ ॥
शतपुत्र्यामभून्नाभि[३]सूनोः सूनुः[४] कुरुर्नृपः ।
कुरुक्षेत्रमिति ख्यातं राष्ट्रमेतत्तदाख्यया ॥ २ ॥
कुरोः पुत्रोऽभवद्धस्ती तदुपज्ञमिदं पुरम् ।
हस्तिनापुरमित्याहुरनेकाश्चर्यसेवधिम् ॥ ३ ॥
श्रीयुगादिप्रभोराद्या चो[५]चैरिक्षुरसैरिह ।
श्रेयांसस्य गृहे पंचदिव्याढ्याजनि पा[६]रणा ॥ ४ ॥
जिनास्त्रयोऽत्राजायन्त शा[७]न्तिः कुन्थुररस्तथा ।
आमहिमाद्रि(अत्रैव सा ?)र्वभौमर्द्धिं बुभु[८]जुस्ते महीभुजः ॥५॥
मल्लिश्च समवासार्षीत्तेन चैत्यचतुष्टयी ।
अत्र निर्मापिता श्राद्धैर्वीक्ष्यते महिमाद्भुता ॥ ६ ॥
भासतेऽत्र जगन्नेत्रपवि[९]त्रीकारकारणम् ।
भवनं चाम्बिकादेव्या यात्रिकोपद्रवच्छिदः ॥ ७ ॥
जाह्नवी चालयत्येतच्चैत्यभित्तीः स्ववारिभिः ।
कल्लोलोच्छालितैर्भूयो भक्त्या स्वात्रिकीरिव ॥ ८ ॥

---

१ 'त्रिभि[:]' A. B. २ 'वास्तोष्य(ष्प ?)ति' A.
३ 'नाभिसु(सू ?)नोः' A. ४ 'सूनु[:]' B.
५ 'चौच्चै' B. ६ 'पारणे' B.
७ 'शान्ति[:]' B. ८ 'बुभुज(जु ?)स्ते' B.
९ 'पे(प ?)वित्री' A.

सनत्कुमारः सु[1]भूमो महापद्मश्च चक्रिणः ।
अत्रासन् पाण्डवाः[2] पञ्च मुक्तिश्रीजीवितेश्वराः ॥ ९ ॥
गङ्ग[3]दत्तः कार्तिकश्च श्रेष्ठिनौ सुव्रतप्रभोः ।
शिष्यावभूतां विष्णुश्च नमुचेरत्र शासिता ॥ १० ॥
कलि[4]दर्पद्रुहं स्फीतसङ्गीतां सद्वसुव्ययाम् ।
यात्रामास्त्रत्रयत्यन्नं भव्या निर्व्याजभक्तयः ॥ ११ ॥
शान्ते कुन्थोऽर च(रस्य ?)चतुष्क[5]ल्याणी चाऽत्र पत्तने ।
जज्ञे जगज्जनानन्दा संमेताद्रौ च नि[6]र्वृतिः ॥ १२ ॥
भा[7]द्रस्य सप्तमी श्यामा नभसो नवमी शितिः ।
द्वितीया फाल्गुनस्यान्त्या तिथ्योऽमूर्वो दिवश्च्यु[8]तेः ॥ १३ ॥
ज्येष्ठे[9] त्रयोदशी कृष्णा माधवे च चतुर्दशी ।
मार्गे च दशमी शुक्ला तिथयो जनु[10]षस्तु वः ॥ १४ ॥
शुक्रे[11] चतुर्दशी श्यामा राधे बहु[12]लपञ्चमी ।
[13]सहस्यैकादशी शुभ्रा ज[14]न्मुर्दीक्षादिनानि च ॥ १५ ॥

---

१ 'सुभूमौ' B.
२ 'पाण्डवा[ः]' B.
३ 'स(ग ?)ङ्गदत्तः' B.
४ 'कलिदर्पङ्कदं(द्रुहं ?)' A.
५ 'चतुक्का(ष्क ?)ल्याणी' A.
६ 'निव(र्व ?)त्तिः' A.
७ 'भाद्रपदस्य(?)' B.
८ 'दिवश्च्युते[ः]' B.
९ 'ज्येष्टे(ष्ठे ?)' B.
१० 'जनुषस्त(स्तु ?)वः' B.
११ 'शुक्ले(क्रे ?)' A.
१२ 'व(ब ?)हुल' A.
१३ 'सहस्यैकादशी', इत्यारभ्य 'मार्गे वलक्षा दशमी' इति श्लोकपादान्तं A. पुस्तके नास्ति ।
१४ 'जन्मु(न्मुः ?)' B.

पोषस्य नवमी श्वेता[१] तृतीया धवला मघोः ।
ऊर्जस्य द्वादशी श्वेता ज्ञानोत्पत्तेरहानि वः ॥ १६ ॥
शुक्रे त्रयोदशी कृष्णा वैशाखे प[२]ञ्चतिः शितिः ।
मार्गे वलक्षा दशमी मुक्ते[३]र्वस्तिथयः क्रमात् ॥ १७ ॥
भवादृशानां पुरुषरत्नानां जन्मभूरियम् ।
स्पृष्टाऽप्यनिष्टं शिष्टानां पनिष्टि किमुत स्तुता ॥ १८ ॥

तादृग्विधैरतिशयैः पुरुषप्रणीतै-
र्विभ्रा[४]जितं जिनपतित्रितयैर्महै[५]श्च ।
भागीरथीसलिलसङ्गपवित्रमेत-
ज्जीया[६]च्चिरं गजपुरं भुवि तीर्थरत्नम् ॥ १९ ॥
इत्थं पृषत्कविषया[७]र्कमिते शकाब्दे १२५५
वैशाखमासि शितिपक्षगषष्ठतिथ्याम् ।
यात्रोत्सवोपनतसङ्घयुतो यती[८]न्द्रः
स्तोत्रं व्यधाद्गजपुरस्य जिनप्रभाख्यः ॥ २० ॥

श्रीहस्तिनापुरस्तवनक[९]तिः श्रीजिनप्रभसूरीणाम् ॥
ग्रं० २१ अ० १६ ॥

---

१ 'श्येनी' B. २ 'पश्चि(श्च ?)तिः' B.
३ 'मुक्ते व(र्वः ?)' B. ४ 'वि(वि ?)भ्राजितं' A.
५ 'महे(है ?)श्च' B. ६ 'ज्जा(ज्जी ?)याच्चिरं' A.
७ 'विषयार्क' A. ८ 'यतीन्द्र[ः]' A. B.
९ 'कृति[ः]' A.

अह विज्जातिलयमुणी आएसा संघतिलयसूरीणं।
परिसेसलवं जंपइ कन्नाणयवीरकप्पस्स ॥ १ ॥

तहा हि भट्टारया सिरिजिणप्पहसूरिणो सिरि-दउ[1]लतावादनयरे साऊपेथड-साऊसहजा-ठ० अचल-कारिअचेइआणं [2]तुरक्के(क्के ?)हिं कीरमाणं भंगं फुरमाणदंसणपुव्वं निवारित्ता, सिरिजिणसासणपभावणातिसयं कुणंता, पाडिच्छगाणं सिद्धंतवायणं दिंता तवस्सीणं अंगाणंगपविट्ठागमतवाइं कारिंता, विणेयाणं अवरग[3]च्छीयमुणीणं पि पमाणवागरणकव्वनाडयालं-का[4]राइं सत्थाइं भणंता उब्भडवायभडवायाणं वाइविंदाणं अणप्पं दप्पमवहरंता, सावसेसं वच्छरतिगमइ[5]क्कमंति, ।

इओ अ सिरिजोगिणिपुरे सिरिमहम्मदसाहिसगाहि-राओ कहिं चि अवसरे पत्थुआए पंडिअगुट्ठीए सत्थविआरसंसय-मावन्नो सुमरेइ गुरूणं गुणे; भणइ अ जइ ते भट्टारया संपयं महस[6]हालंकरणं हुंता ता मज्झ मणोगयसमत्थसंसयसय-स[7]मुद्धरणे हेलाए खमंता। नूणं बिहप्पई तब्बु[8]द्धिपराजिओ चेव भूमिमुज्झिअ सु[9]न्नं गयणदेसमल्लीणो। इत्थं गुरूणं वण्णिज्ज-किज्जमाणगुणवन्नणाइअरे अवसरन्नू तक्कालं दउलतावादा-

---

१ 'दउ[ल ?]तावादनगरे' A. २ 'तुरक्केहिं' A.
३ 'प्रवरगच्छमुणीणं' B. ४ 'लंकाराइं' B.
५ 'इक्काव(मं ?)ति'; B. ६ 'स(सु ?)हालंकरणं' A. B.
७ 'संसय[सय]समु(मु ?)द्धरणे' B.
८ 'बुद्धे(द्धि ?)पराजिए' A. ९ 'स(सु ?)न्नं' A. B.

दाग[1]ओ तांजलमलिक्को भूमिअलमिलिअभालवट्टो विन्नवेइ—महाराय! संति ते तत्थ महप्पाणो परं तन्नयरनीरमसहमाणा किसिअंगा गाढं वट्टंति'। तओ संभरिअगुरुगुणपब्भारेण भूमिनाहेण सो चेव मीरो आइट्ठो—भो म[2]लिक! सिग्घं गंतूण दुवीरखाने लिहावेसु फुरमाणं पेसेसु तत्थ, जहा तारिस-सामग्गीए चेव भट्टारया पुण इत्थ इंति। तओ तेण तहेव कए पेसिअं फुरमाणं। 'कमेण पत्तं सिरिदउ[3]लतावाददीवाणे। भणिअं च सविणयं नयरनायगेण सिरिकुतुलखाने[4] भट्टारयाणं सिरिपातसाहिफुरमाणागमणं ढिल्लीपुरं पइ पत्थाणं चा[5]इट्ठं। तओ दिणदसगब्भंतरे सन्नहिऊण जिट्ठसिअबारसीए रायजोगे संघसत्थिअपरिसाए अणुगम्ममाणा पत्थिआ महयाविच्छड्डेणं गुरुणो। कमेण ठाणे ठाणे मह्रसवसयाइं पाउब्भावयंता, विसमदूसमाइप्पं दलंता, सयलंतरालजणवयजणनयणकोऊहल-मुप्पायंता, धम्मठाणाइं उद्धरंता, दूरओ उक्कंठावि[6]संठुलसमा-गच्छंतआयरियवग्गेहिं वंदिज्ज[7]माणा, पत्ता रायभूमिमंडणं सिरिअल्लावपुरदुग्गं। तत्थ तत्तारिसपभावणापगरिसाऽसहिणऊ-मिलक्खुकयं विप्पडिवत्तिं मुणिऊण, ताणं चेव गुरूणं सीसुत्तमेहिं

---

[1] 'दउलतावादादाग-(ओ—) इत्यारभ्य[मीरो आइट्ठो' इत्यन्तं B., पुस्तके नास्ति।

[2] 'भो मलिक्क' A. B. [3] 'दओ(उ ?)लतावाद' A. B.

[4] 'खाते(ने ?)ण' A. [5] 'वा(चा ?)इट्ठं' A.

[6] 'विसंटु(ठु ?)ल' A. [7] 'वंदिज्जा(ज्ज ?)माणा' B.

रायसभामंडणेहिं गुरुगुणालंकिअदेहेहिं सिरिजिणदेवसूरीहिं वि[1]न्नत्तेण भूवइणा सम्मुहं पविट्ठाविएण सवङ्गमाणं फुरमाणेण, मलिकपच्चप्पिअसयलसत्थिअवत्थुणो विसेसओ जिणसासणं पभावयंता सड्ढं मासं अच्छिअ, पत्थिआ अल्लावपुराओ। पुणो वि धरणीनाहेण सिरिसिरोहमहानयरे संमुहपेसिअमसिणसिणिद्धदेव-दू[2]सप्पायवत्थदसगेण अलंकरिआ, जाव हम्मीरवीररायहाणी परिसरदेसेसु संपत्ता।

इओ चिरोव[3]चिअभत्तिराएण अभिमुहमागएहिं दंसण-निमित्तओ वि अमयकुंडलाएहिं व[4] धनमप्पाणं मन्नमाणेहिं आयरिअजइसंघसावयविंदेहि परिअरिआ भद्दवयसिअबीआए जाया रायसभामंडणं जुगप्पहाणा। तक्खणं आणंदभर-निब्भरेहिं नयणेहिं अब्भुत्थाणमिवायरंतेण सिरिमहम्मदपात-साहिणा पुच्छिआ कोमलगिराए कुसलपउत्तिं, चुंबिओ अ ससिणेहं गुरूणं करो धरणिराएण, धरिओ अ हिअए अच्चंतादर-परेण। गुरूहिं पि तक्कालकविअअ[5]हिनवासीवयणदाणेन चमक्कारिअं नरेसरमाणसं। पेसिआ य महामहसारं विसाल-सालं पोसहसालं। आइट्ठा य मही‌नाहेण गुरूणं सह गम[6]णाय पहा[7]णपुरिसा हिंदुअरायाणो सिरिदीनारपमुहा महामल्लिका य। पणमंति सयसाहस्सा चिरुक्कंठिआ सावयलोआ। मिलिआ

---

१ 'विन्नि(न्न ?)त्तेण' B.
२ 'देवदूसव्या(प्पा ?)यवत्थदसगेण' A.
३ 'वि(चि ?)रोवचिअ' A. ४ 'वधं(व—ध—?)' B.
५ 'अहिनि(न ?)वासी' B. ६ 'सम(ह ?)गमणाय' B.
७ 'पहाणपुरिसंघसावयसा' B.

य चिरदंसणूसालसा नायरलोआ। संगया य कोऊहलेणं पुराइजाणवयजणा। तओ वं[1]दिविंदेहिं भोगावलीहिं थुवंता[2], भूवालप्पसाइअभूरिभेरीवेणुवीणामद्दलमुइंगपडुपडहजमलसंखभुंग-ला[3]इ विउलवाइअरवेणं दिअंतरालं मुहलं[4] विणिम्मविंता, विप्पवग्गेहिं वेअज्झु[5]णीहिं थुणिज्जंता, गंधव्वेहिं सूहवाहिअं गाइज्ज[6]-माणमंगला पत्ता तक्कालं सिरिसुरताणसराइपोसहसालं। कया य व[7]द्धा[व ?]णयमहूसवा संघपुरिसेहिं। वाइओ अ भट्टवयसिअतइआदिणे सयलसंघकारिअमहूसवसारं सिरिपज्जोसवणाकप्पो। पत्ता य ठाणे ठाणे आगम[8]णप्पभावणालेहा। रंजिआ सयलदेससंघा। मोइआ अणेगे रायबंदिबद्धा राय-दिज्जसयसाह[9]स्सा सावया। इअरलोगा य करुणाए उम्मोइआ काराहिंतो। दिन्ना दाविआ य अपइट्ठाणं पइट्ठा। कया य काराविआ[10] य अणेगसो जिणधम्मप्पभावणा।

एवं णिच्चं रायसभागमणपंडिअवाइअविंदविजयपुव्वं पभावणाए पयट्टमा[11]णाए कमेण वासारत्तचउमासीए वइक्कंताए अन्नया

१ 'विं(वं ?)दि' A. व्विं(वं ?)दि B.
२ 'थुव्वं(वं ?)ता' B. ३ 'भुंग्ग(ग ?)लाइ' A. B.
४ 'मुहलं' इति A. पुस्तके नास्ति।
५ 'वेअज्झुणीहि(हिं ?)' B. ६ 'गाइयज्जमाण' B.
७ 'बद्धानयण(णय ?)' A.
८ 'आगमप्पण(णप्प ?)भावना-' B.
९ 'स(सा ?)हस्सा' B.
१० 'काराविआ...अणेगसो' B.
११ 'पयट्ट(ट्ट ?)माणाए' A.

फग्गुणमासे दउलतावादाओ[1] आगच्छंतीए मगदूम[2]हू-जहाँ(हां ?)नामधिज्जाए निअजणणीए संमुहं पट्टिएण चउरंगचमू-समूहसमद्धेण सुरत्ताणेण अब्भत्थणापुरस्सरं चालिआ गुरुणो अप्पणा समं। बउथूणठाणे भिट्टिआ जणणी। महाराएण दिन्नं सव्वेसिं महादाणं। परिधाविआ सव्वे पहाण कबाइवत्थाइं। कमेण पत्तो मल्लसवमइं रायहाणिं। सम्माणिआ गुरुणो वत्थ-कप्पूराईहिं। तओ चित्तसिअइवालसीए रायजोगे महा-राया[3]णमापुच्छिअ पातसाहिदत्तसायबाण[4]छायाए कया नंदी। तत्थ दिक्खिआ पंच सीसा। मालारोव[5]णसंमत्तारोवणाईणि अ धम्मकि[6]च्चाइं कयाणि। विढ्विअं वित्तं थिरदेवनंदणेन ठ० मदनेन। आसाढसुद्ध[7]दसमीए अ पइट्ठिआणि अहिणव-कारिआणि तेरस बिंबाणि महावित्थरेणं। तत्थ विढ्विअं विम्बं[8] कारावएहिं बहुअं वित्तं, विसेसओ साहुमहारायतणएण अजयदेवेणत्ति।

तहा अन्नया नरिंदेण दूरओ निच्चं समागमणे गुरूणं क(ट्ठ ?)टठंति[9] चिंतिऊण पदिन्ना सयमेव निअपासायपासे सोहंत-

---

१ 'दओ(उ ?)लतावादी(दा ?)ओ' B.

२ 'मगदूमई' B. ३ 'महारायाण(मा ?)पुच्छिअ' B.

४ 'साइ(य ?)बाण' A.

५ 'मालो(ला ?)रोवण' A. 'मा[ला ?] रोवण' B.

६ 'किच्चाई' B. ७ 'सु(सु ?)द्ध' A. B.

८ 'बिंब(बं ?)' B. ९ 'कट्ट(ट्टं ?)ति' A.

भवणराई अंभिणव[1]सराईया, आइट्ठा य वसिउं तत्थ सावयसंघा। भट्टारयसराइत्ति कयं से सयं नरिंदेण नामं। कारिओ तत्थेव वीरविहारो पोसहसा[2]ला य पातसाहिणा। तओ तेरसं-थनवासिअवरिसे [१३८९ वि. सं. = 1332 A.D.] आसाढ-किण्ह[3]सत्तमीए स[4]मुहुत्ते महिव[5]इसमाइट्ठगीयनट्टवाइअसंपदाए पयडिज्जमाणअमाणमहूसववसारं सयं नरिंदेण दाविज्जमाणमहादाणं गाइज्जमाणमंगलं पविट्ठा पोसहसालं भट्टारया। संतोसिआ पोइदाणेणं विउसा। उद्धरिआ दाणेणं दीणाऽ[6]नाहाइलोआ।

चालिआ पुणन्नया मग्गसिरमासे पुव्वदिसजयजत्तापत्थिएण अप्पणा सह नरिंदेण। करिआ ठाणे ठाणे बं[7]दिमोअणाइणा जिणधम्मपभावणा। उद्धरिअं सिरिमहुरातित्थं। संतोसिआ दाणाईहिं दिअवराइणो। निच्चं पवासूणं खंधावारे कट्ठंति मग्ग-माणेण महीनाहेण खोजे जहांमलिक्केण सद्धिं आगरानगराओ पडिपेसिआ रायहाणिं पइ सच्च[8]पइन्ना गुरुणो। गच्छिऊण सिरिहत्थिणाउरजत्ताफुरमाणं समागया निअठाणे मुणिवइणो। तओ मेलिऊण चउव्वि[9]अं(हं ?) संघं काऊण य पुत्तचाहडसहिस्स

---

1 'सराई[या ?]' A. B.
2 'साल(ला ?)य' A.
3 'किन्ह(ण्ह ?)' B.
4 'सुम(मु ?)ह(हु ?)त्ते' A. B.
5 'सुमहीवइ' B.
6 'दीणाणाहोइ(णाऽनाहि)' A.
7 'बंद(दि ?)' A. B.
8 'सब(च्च ?)पइन्ना' A.
9 'चउव्विहं' B.

साऊबोहित्थस्स संघवइत्ततिलयं। पट्ठिआ सुमुहुत्ते[1] सायरिआइ-परिवारा सिरिहत्थिणाउरजत्तं गुरुणो । विहिआ ठाणे ठाणे संघवइबोहित्थेण मह्रूसवा । संपत्ता तित्थभूमिं । कयं च वद्धावणयं । ठाविआणि तत्थ गुरूहिं अहिणवकारिअपइट्ठिआणि सिरिसंतिकुंथुअरजिणबिंबाणि अंबि[2]यापडिमा य चेइअठाणेसु । कया[3] य संघवच्छल्लाइमह्रूसवा संघवइणा संघेण य। पूइआ वत्थभोअणतंबोलाईहिं वणीमसग[4]त्था.। आगयमित्तेहिं जत्ताओ गुरूहिं वइसाहसुद्धदसमीदिणे तं चेव[5] दूरीकयसयलदुरिअ[6]डिंबं सिरिमहावीरबिंबं ठाविअं मह्रूसवसारं साहिरायकारिअविहारे। तहेव पूइज्जइ संघेण। विसेसओ दिसिजत्ताओ समागए महाराए पवट्टंति ऊसवा चेइयवसहीसु । संमाणेइ गुरुणो उत्तरोत्तरमाणदाणेण सिरिसव्वभोमो । वज्जंति पइदिणं सूरिसव्वभूमाणं पभावणासारा जसपडहा । विहरंति निरुवसग्गं सव्वदेसेसु सेअंबरा दिअंबरा य रायाहिरायदिफुरमाणहत्था । खरतरगच्छालंकारगुरुप्पसायाओ सगसिन्नपरिभूए वि दिसिचक्के कया[7]इं गुरूहिं फुरमाणगहणेण अकुतोभयाइं सिरिसित्तुज्जगिरिनारफलवद्धिप्पमुहतित्थाइं। उज्जोइ[8]आ इचाइकिच्चेहिं सिरिपालित्तय-मल्लवाइ-सिद्धसेण-दिवायर-हरिभद्द-

---

१ 'सुमुह(ऊ ?)त्ते' A.  
२ 'अंबिआ' B.  
३ 'कयाइ' B.  
४ 'वणीममसत्था' B.  
५ 'चे...दूरीकय' B.  
६ 'विं(?)डिंबं' A.  
७ 'का (क ?)याइं' A.  
८ 'ओ(उ ?)ज्जोइआ' A.

